# सत्यहरिश्चन्द्रोदयम्

( संस्कृत उपन्यासः )

लेखकः

रामजी उपाध्यायः




प्रकाशकः

भारतीय-संस्कृति-संस्थानम्

महामनापुरी, वाराणसी-५




# भूमिका

कविरपि प्रजापतिरिव स्रष्टा भवति। पाञ्चभौतिकं जगत् सत्यं, शिवं, सुन्दरं निर्माय नैसर्गिकमूलशाश्वतप्रवृत्तिभिर्विश्वं सम्भृत्य यतः प्रजापतिर्विरमति, ततो ज्ञानविज्ञानकलाविशारदाः प्रजापतेर्मूलभूतासु कृतिषु नित्यं नूतनसम्भाव्यतामाविष्कृत्य तस्यायोगेन विश्वं सत्यतरं, शिवतरं, सुन्दरतरं च विधातुं प्रयत्नपराः शोभन्ते। इदमेव सृष्टेः सातत्यस्य सापेक्षिकज्ञानविज्ञान-निभृतं रहस्यम्। अनेन प्रकारेण विश्वोदयपथे आनन्त्यमेव परमादर्शः प्रगमयति ज्ञानविज्ञानकलाधिषणान् साधकान्। तेषां पूर्वोक्तः कार्यविधिर्वस्तुतः संस्कृतिर्या परात्परमविश्रान्तं पदं निदधती विश्वेषां संस्कारं जनयति। एतादृशेषु संस्कृतिकारेषु सत्कविः प्रथमपदमर्हति।

एतत् शाश्वतविधानमुररीकृत्य मया हरिश्चन्द्रचरितं एतरेय ब्राह्मणे, महाभारते, मार्कण्डेयपुराणे, देवीभागवते, चण्डकौशिके, सत्यहरिश्चन्द्रे, हरिश्चन्द्रचरिते च संस्कृतभाषया, सत्यहरिश्चन्द्रे च हिन्दीभाषया वर्णितं सम्यगवगाहितम्, निष्कृष्टं च पर्यालोचनेन यदद्यावधि तस्य चरितं न यथायोग्यं साध्वनुसंहितं पूर्वपरायणैः कविरत्नैः। विपरीतदिशा रामस्य चरितमत्र निदर्शनमर्हति। न केवलं भारतेऽपि तु सहस्रशः क्रोशातिदूरे महाद्वीपान्तरेष्वपि तस्य चरितगाथा नवैर्नवैरभारतीयैरपि चरितप्रसङ्गैर्व्यूढा न केवलं तत्रत्यान् लोकान् रमयति, अपि तु सत्त्वप्रकाशेन तेषामादीनवमपहरन्ती दिव्यतां चादधती समाद्रियमाणा शाश्वतप्रतिष्ठां गता। एतेषामनुशीलनेन स्पष्टं प्रतिभाति यत् महासत्त्वानां चरितानि इयत्तया परिच्छिन्नानि न भवन्ति। वस्तुतः कस्यचिद् देशस्य विश्वजनस्य वा कोऽपि

निसर्गजनितो महर्षिकृतो वा सांस्कृतिकः सागरः प्रभवति । ततः परमपेक्षितानि सांस्कृतिकरत्नान्याविष्कृत्य तानि प्रातिभसूत्रेण संग्रथ्य कविः कस्यचित् महासत्त्वस्य कण्ठाभरणं विरचयति । इदं कविकर्म लोकं स्वप्रभयालोकयति, विश्वजनीनं सत्त्वं जनयति च ।

मयापि सत्यहरिश्चन्द्रोदयेऽस्मिन् भारतीयसंस्कृतिसागरोपमान् वेदपुराणेतिहासादीन् निर्मथ्य नायकोचितसन्दर्भान् प्रकल्प्यानुचितांश्च परित्यज्याधुनिकभारतीयसमाजस्य विशेषतः संस्कृतानुरागिणां प्रतिपत्तयेऽभ्युत्थानाय च यत् कृतं, तद् भाविकविकर्मोद्यतान् सुपथं प्रदर्शयत्विति कामयमानः—

महामनापुरी, वाराणसी–५ उपाध्याय ः श्रीरामः
रामनवमी वि० सं० २०४४

# सत्यहरिश्चन्द्रोदयम्

लोकाभ्युदय–विभवेन विश्वविश्रुतः कोशलो नाम साम्प्रियको जनपदो भारते वर्षे सच्चारित्र्य-सन्निवेशेन प्रमाणभूतो दिवौकसामपि दर्शनीयतां गतः । तत्र प्रजानां चतुर्वर्गोपपत्ति-साधनधारिणीं धरणीमन्विष्य मानवेन्द्रो मनुः पुरस्तात् पृथिव्यां स्वनिवेशं चकार। प्रदेशेऽस्मिन् शैलाधिराजस्य तपःस्थलीषु सञ्चरतां महामुनीनां वेदघोषनिर्भरमन्द्राणां घनानामप्सु लब्धजनिः सरयूः शाश्वतं स्वीकृतेन पितुरौदास्त्येन दर्शन-ध्यान-स्नान-पानजुषां धवलतां विदधाति ।

सरयूपकण्ठे कोशलानां राजधानी आदिराजेनोत्तमश्लोकेन मनुनायोध्यायामकारि। सा नगरी दिग्दिगन्तरेभ्यः समागतान् सर्वविद्याविशारदान् प्रज्ञाधुरीणान् निकाममाश्रयामास। तत्रत्यानामाचार्याणां श्रीचरणान् समुपास्य भूमण्डले विश्वमानवा विद्यां चरित्रं च प्रपेदिरे। अत एव नासीत् तदा पृथिव्यां कश्चिदल्पविद्यः ।

'सत्यं तातान सूर्यः' इति लोकेषु सत्यादर्शं शाश्वतं प्रतिष्ठापयितुं वंशकरः सूर्यः स्वीयां परम्परां तत्र मन्वादिभ्यः प्रवर्तयामास। सूर्यवंशस्य नीराजितलोकः कूटस्थो मानवेन्द्रो मनुः स्वीयेन सदाचारेण तदनुरूपं प्रजानां नियतव्रतेन यं सनातनमात्मगुणादर्शं प्रतिष्ठापयामास, स एव परत इक्ष्वाकुकुलनरेन्द्राणां प्रजापालनवृत्तिषु मानदण्डो बभूव ।

तस्मिन् भुवनत्रयकीर्तितेऽभिजाते सूर्यवंशे त्रेतायुगे प्रजापतिरिव प्रजानन्दनः सर्वविद्यावदातो ब्रह्मकोशस्य गोप्ता, उदारधीः, यशस्वितमः, मनीषी सत्यवतीपुत्रश्चन्द्रनिभो हरिश्चन्द्रो नाम राजर्षिः प्राभवत्। तस्य नित्यमापूर्यमाणेन गुणौघेन निमज्जिता अपि प्रजाः स्वस्वाश्रमेषु प्रतिष्ठा-

पिता आत्मानं परेष्वपि वीक्षमाणाः, परच्छिद्रपिधायिकाः, स्वीयं सर्वस्वं परार्थं मन्यमानाः परोत्कर्षपराः, स्वचारित्र्योच्छ्रयेण लोकजीवनं मधुरयन्तः, परोपकारततिभिः 'वसुधैव कुटुम्बकम्' इत्यादर्शं सार्थयन्ति स्म। तासां राजादर्शेन संविभागेन सर्वे चरा अचराश्च परस्परं सौमनस्य-संगता अहमहमिकया प्राणिलोकेभ्यः प्रतिपदं जीवन-सौरभ्यं वितरन्तिस्म।

इति हरिश्चन्द्रोदयो नाम प्रथमं प्रकरणम्।

कुलधनो गृहमेधी हरिश्चन्द्रः पुत्रमुखमायौवनं न ददर्शेति भूयसी चिन्ता तं चिरमद्नोत् । 'अस्मत्परं सूर्यवंशीया मे पूर्वजाः कथं पितृयागेन परितर्पणं लप्स्यन्ते' इत्यतोऽपि तस्य दुःखतरमासीत्—'कथं नाम भविष्ये मदनन्तरं सूर्यवंशीयानामादर्शप्रजापालनवृत्त्या लोकाः साम्प्रतं वर्धिष्यन्ते' इति चिन्ता । तस्य पत्नी महिषीरत्नं शैब्या 'मम जायात्वमद्यावधि विरमपार्थमेवेति चिन्तापरायणा सविशेषं व्रतनियमानुष्ठानादिभिरात्मानं निकामं विश्वम्भरपुत्रलाभाय संस्कारयामास । एकदा तौ दम्पती स्वाभीष्टतमं प्रयोजनं हृदि साधिष्ठं निधाय—

'पुरोधसस्तु विद्वांसस्तारयन्ति सदा नृपान्'

इति नीतिमनुसरन्तौ राज्यकुशलकामस्य स्वकुलगुरोः श्रुतिवृत्तोपसंहितस्य वसिष्ठस्याश्रममुपजग्मतुः । सुतविच्छेदमधिकृत्य शोकोत्थानभूमिरेव तयोः पुत्रकाम्येति महामुनिर्वसिष्ठो राज्ञोर्दर्शनमात्रेण व्यजानात् । स हरिश्चन्द्रं व्याजहार—प्रजानाथ, साधारणोऽपि जनोऽनुत्तमं स्वेष्टं महता श्रमेण तपसा च लभेतेति दिव्येन विधानेन प्रजासु सत्कामाः शिवसंकल्पाश्च सम्भिद्यन्ते । किं पुनर्भवादृशानां नृपोत्तमानां विषये मयोदाहरणीयम् । विश्वतः कल्याणोदर्कस्तेऽभिनिवेशः । भवतः पुत्रो भवतु परममुत्कृष्टो लोकपालकश्चेति न केवलं प्रजानां मन्त्रिणां च समीहा, अपि तु सर्वेषां लोकपालानाम्, विशेषतो मम पितुर्वरुणस्येति तस्य समामुपासीना सरयूर्वरुणमुखादेव विज्ञापिता प्रसङ्गवशान्मामवोचत्—'शाश्वतोऽयमृतंभरस्त्रैलोक्यसम्राड् न केवलं साम्प्रतिकीं लोकस्थितिमपि तु भाविनीमपि तां भवतो भाविनादर्शेन प्रतिष्ठापयितुकामो वर्तत इत्यहं

नियतिनियोगं ध्यानयोगेन पश्यामि। स वरुणो भवता गङ्गासागर-संगमे साक्षादुपासनीयः। तत्रोपगम्य वरुणमुद्दिश्य ब्रह्मचर्यव्रतविधानेनात्मानं तस्य प्रसादपात्रं कर्तुमर्हति भवान्। प्रजाकामो भवान् प्रजापतिरिव तपस्तपतु। तपसो हि परं नास्त्यन्यत् किंचिदभ्युदय-सोपानम्। तपसा विन्दते महत्। तपसा प्राप्यते सत्त्वम्। भवतः पूर्वजो मनुर्नाम नराधिप ऊर्ध्वबाहुर्विशालायां बदर्यामेकपादस्थितस्तीव्रं तपश्चचार। तेन तपसा स युगान्ते प्रलयोपप्लुते जगति सदेवासुरमानवाः सर्वाः प्रजाः ससर्जेति वचनेन महामुनिः पुत्रसिद्धि सम्यग् विश्रम्भय्य तौ दम्पती विसर्जयामास।

गुरो रोचकविवरणेन जातसम्यगाशाबन्धो हरिश्चन्द्रो मन्त्रिणां जनपदमुख्यानां चाभ्यनुज्ञानेन लब्धास्पदानामधिकारिणां राज्ञ्याः शैव्यायाश्च कुशलहस्ते प्रजापालनधुरं निधाय स्वयमेव प्रयतात्मा पूर्वस्यां गङ्गासागराभिमुखं सरयूपुलिनप्रकीर्णपथेन पादचारेण तीर्थयात्रायै प्रतस्थे। तस्य माहात्म्यानुरूपं प्रतिपदं सुखार्थं सुरभितो वायुः सहावात्। मधुरं मन्द्रायमाणा नभोगजा उपर्युपरि सह विहरन्तश्छत्रीबभूवुः। वनवृक्षलताभिस्तस्मै यथावश्यकं सरसं पाथेयमुपहृतम्। स्थाने स्थाने मधुपा मधुझङ्कारैस्तस्मै स्वागतं व्याजह्रुः।

हरिश्चन्द्रोऽधियात्रं यत्र तत्र पारिग्रामिकस्थलीषु मृगशावकगोवत्समयूराणां, कमलावासेषु जलाशयेषु भ्रमरमत्स्यानां, पुष्पागमनक्षेषु वृक्षेषु चित्रपतंगानां, दीपसन्निधानेषु शलभानां, ग्रामोपशल्येषु बालवृद्धयूनां च नृत्तेन, उपवनेषु मञ्जुगायकानां मयूरशुक-कोकिल-हंस-सारस-भ्रमराणां कलरवेण, नभसि घनगर्जनेन च सरसीकृतान्, गोसाहस्री-संचारपांसुलान्, मधुरान्नपानसुरभिप्रदेयशस्यलतावनस्पतिभिः परिहितान्, निसर्गसंगीतधरान्, प्रमुदितकृषीवलान्, निशायां विद्युद्बिन्दुप्रख्यैर्दृष्टि-बन्धुभिर्द्योतितान्, स्वात्मपूर्णान् जनपदान् ददर्श। स्थाने स्थाने ग्रामकूटैरभिनन्दितो हरिश्चन्द्रो 'दिव्या खल्वेतेषामलंकामतेति विमृश्य तान् भूरिशः प्रशशंस।

अन्यत्र हरिश्चन्द्रेण शिल्पशास्त्रादिविज्ञानविपुलीकृतभोज्यपेयपरिधान-

व्यासविलाससाधनानि, चतुष्षष्टिकलानिलयानि, पताकाभिर्दूरदूरतर-प्रदेशेभ्यो दर्शकान् निमन्त्रयमाणानि, आनर्तेषु दिवारात्रं नाट्योल्लसित-लास्यरागरञ्जितानि लोकोत्तरपण्यार्पणापणसम्पूरितकाम्यानि सरयूजले दूरतोऽपि विगाह्यमानाभ्रंकषप्रासादच्छायाचित्राणि च तटीयनगराणि विभावितानि ।

कालान्तरेणानुपथं हरिश्चन्द्रो गङ्गा-सरयू-सङ्गमप्रदेशेऽतिथीनां स्व-गेहभूतं, मनःप्रह्लादजननं, दृष्टिकान्तं, स्फुटितकमलामोदकषायं, सुख-शाद्वलं, मधुरारावैर्विहगैर्विपुलं नादितम्, उत्कचपुष्पवृक्षैः समावृतं, ब्रह्म-लोकप्रतीकाशं पावनं पुण्याख्यं नामाश्रमपदं ददर्श । तत्र भावितात्मनां कपोतवृत्तीनां परंतपस्तनतां, पर्णसंस्तराणामृषीणां संवासोऽवर्तिष्ट । प्रदेशे-ऽस्मिन् ब्रह्ममनःसम्भवान्मानससरसः स्रुता सरयूः स्वात्मभूतजाह्नवी-संगम-संक्षोभघर्घरा हरिश्चन्द्रं चिरमरमयत् । आश्रमोपासका उपशमशीलाः परोक्षदर्शका मुनिजना ध्यानयोगेन तस्य भावितपोविशेषं पश्यन्तः स्वात्मना सुप्रसन्नास्तं सोत्साहमभ्यनन्दन् । आतिथेयास्तेऽर्घेण मुनिजनोचितमूलफल-कन्दाशनैश्च तं यथायोगमानर्चुराशीर्वचोभिश्च तस्यार्थसिद्धिं प्रशशंसुः । कतिपयदिवसान् यावन् महामुनीनां तपोविधानान्यादर्शीकृत्याभिरुचिरे पर्णशाला-प्रचिते पुण्याश्रमे साधु विश्रम्य च प्रागवधारितेन गङ्गापुलिन-विहारिपथेन स सिन्धुं प्रति प्रापद्यत । अमृतोपमतोयाभिश्शिवाभिरुप-संस्कृता गङ्गा दर्शनमात्रेण सर्वार्थसाधिनी शोभते । शक्तिरेव सा, गमयति भगवत्पदमतः स्वनाम सार्थयन्ती, दृष्टा पापं हरति, स्पृष्टा स्वर्गं नयति, अवगाहिता च मोक्षदा भवति । जाग्रद्, अश्नन्, वदन, श्वसन् यो गङ्गां सततं स्मरति स कर्मबन्धनान्मुच्यते । एवमेव गङ्गायाः सनातनलोकपावन-प्रसङ्गं मनसि निधाय स सततं तस्याः साक्षाद् दर्शनेन स्मरणेन चात्म-संस्कार सम्यग् व्यधात् । तेन पूर्वमेव श्रुतमासीत्—गङ्गोपकण्ठं स्तपोवनं सिद्धिक्षेत्रमेवेति । तस्मिन् सिद्धिक्षेत्रे निरन्तरं विचरन् स गङ्गाया नैसर्गिक-प्रभावेण मनोरथसिद्धये आत्मानं संसाधयामास ।

मनसा पूर्वतः सुचिरं वरुणोपसदनं प्रतिपन्नो गङ्गातः प्रतिपदं स्वा-भाविकशक्ति समवाप्याचिरात् स लौकिकविभूतिसम्पन्नो विकीर्णशुक्ति-

मौक्तिकरत्नजालोद्भासितपुलिनं गङ्गासागरप्रदेशमुपगतः । तत्र द्वीपं परितः सर्वान् भूखण्डान् महाद्वीपांश्च क्रोडीकुर्वन्, भुवस्स्वर्लोकौ चात्मनि छायामध्यमतया समाकलयन्, तालतरङ्गबाहुभिरभ्यागतानभ्युपगच्छन्, देवेभ्यो रत्नानां निःशेषसमर्पणेनात्मनो रत्ननिधित्वं सार्थयन् मेचकमेदुर-मेघदूतैः पयोराशिं वितीर्य लोकानाप्याययन्, वेलावनानामाम्रकदली-नारिकेललवङ्गैलादिभिः फलैरुपसदनप्रवासिनो धारयन् वरुणालयो विरराज।

हरिश्चन्द्रः पुरो ब्रह्मघोषवन्तममृतस्याकरं निशामुखे प्रचलितवीचिभि-र्नृत्यन्तं, फेनौघैर्हसन्तं, चन्द्रोदये स्वपुत्रं निशानाथमुत्तालतरङ्गहस्तै-रुपगूहितुकामम्, उत्पतन्निपतत्प्रहृष्टजलराशिनाम्बरनिर्विशेषं, तारारत्न-समाकुलं, भेरीसंहतिभिरिव परस्परमाहतोर्मिभिर्विश्वव्यापिदिग्विजयं नाद-यन्तं महार्णवं ददर्श।

तत्र गङ्गासमुद्रयोर्मध्ये सम्भृतामूल्यनिधिसन्निधानमिवैकं सुन्दरवनं पुष्पिताग्राभिर्लताभिराचितं विरराज। कोकिलकूजितैरस्मिन् वने वन-स्पतिलतावृन्दानामभिस्फुरितपत्रपुष्पफलसमृद्धिभिः स्म्पोष्यमाणा आ मृगे-श्वरम् आ पिपीलिकं च वनौकसो मुनिजनानां यमनियमैः प्रभाविताः पर-स्परं मैत्रीमाचरन्तः स्वस्वगुणनिचयैः सौहार्दसौरभं भूयिष्ठं जनयामासुः। तत्र सुवर्णवृक्षराजस्याधस्तात् कस्मिंश्चिन्निवाते कुञ्जकुटीरे हरिश्चन्द्र-स्तपोव्रतानुरूपमासनबन्धधीरं समाधिमास्थायात्मानं निवेशयामास। तदा सुन्दरी-तरुमण्डितं सुन्दरवनं तु बद्धपल्लवपुटाञ्जलिद्रुमं सुदर्शनोन्मुखमृगं तपोवनं समजायत। तत्र वनदेवतानियोगेन संचरन्तो मेघा वनगजाश्च परस्परं मन्द्रैः प्रतिडम्बरैस्तं तपःसाधनेनात्मजयेन च वर्धापयामासुः। हरिश्चन्द्रे तत्र तपसि संस्थिते प्राणिजातस्य नितरां क्षेमः प्राभवत्।

इति हरिश्चन्द्रस्य सुन्दरवनयात्रा नाम द्वितीयं प्रकरणम्।

( ३ )

ऊर्ध्वबाहुर्जितेन्द्रियः पञ्चतपा आत्मेश्वरः सूर्यवंशोद्भवो हरिश्चन्द्रः शाश्वतमहातपसः सूर्याद् व्रतस्य परमादर्शं गृह्णन् सूर्यनिविष्टदृष्टिनैकवर्षं नित्याभियुक्तोऽनिविशमानो वरुणं स्मरन्, जपन्, ध्यायंश्चोवास। योगप्रभावेण शरीरपोषणतत्त्वाधिगमादभ्यवहारस्तस्मै नापेक्षितः। तथापि तत्रत्यातिथेया वृक्षलतादयः प्रत्यग्राणि बहुविधानि सुस्वादूनि सुगन्धीनि च फलानि स्वशाखा आवर्ज्य तस्योपान्ते न्यसृजन्। तेन जलं न पीतं तथापि मेघा मन्दं मन्दं चरन्तो वारिसीकरैस्तमभिषिच्योपतिष्ठन्ति स्म। आत्यन्तिकतपसा तस्य पावकं वपुर्ज्वालाभिर्नैशतिमिरापसारि जातम्। स प्रकाशपुञ्ज एवारोचिष्ट। तथाप्याकाशदीपभूतश्चन्द्रस्तमानिशमुपस्थाय चतुर्दिशमादीपयतिस्म। उद्दामा मृगेन्द्रा विरतहुङ्कारा तत्रोपस्थितास्तपोनुकूलां व्यवस्थां प्रतिपादयामासुः। सुमधुरस्वनाः पक्षिणो नित्यं प्रातर्वेलायां तस्य महिमानमुदीरयन्तो जयोदाहरणं जगुः। कलकण्ठा वैतालिकभूता यथाकालं कूजं कूज मङ्गलं विदधुः। प्राणायामपरायणा झिल्लिका नैशनिःशब्दतामपाकुर्वन्।

कालान्तरेण हरिश्चन्द्रो हृदि सन्निविष्टमृद्धिमतां वरेण्यं तपोनिष्पत्त्या परं प्रीतं प्रसन्नवदनं, सौम्यं, लावण्यामृतधाराभिः प्रजास्तर्पयन्तं, सृष्टिसंहारकर्तारं वरुणमपरं नारायणमिव समक्षं ददर्श। स गन्धपुष्पाद्यैस्तमभीष्टदेवमभ्यर्च्य 'भवतो नियोगस्य सोत्साहं निष्पादनेनात्मानं परितोषयितुं समीहे' इति पुटाञ्जलिः प्रार्थयाञ्चक्रे। वरुणः साशीर्मनास्तस्मै स्वमनोगतमुवाच—राजन्, अधुना पितृपरायणस्त्वं सम्यक् पुत्रकामोऽसीति सर्वेषां लोकपालानां विदितमेव। तव पुत्रोऽनन्यसाध्य देवानामपि कार्यभरं सम्पादयेदिति मनसिकृत्य तैः रोधोपाहतस्तव पुत्रोदयो व्यधायि। नातपसां

महती सिद्धिः। अत एव तव पुत्रोदये न केवलं युष्मदीयम्, अपितु प्रजानां देवर्षीणां च यथाकालं तपश्चरणमनुबद्धम्। तत्तु सम्प्रति त्वया स्वयं सम्यगनुष्ठितमेव। अद्यावधिचरितेन सात्त्विकतपसा सर्वातिशायिनी तवात्मगुणसम्पत्तिः सहस्रगुणं समुत्कर्षिता वर्धते। तां च 'आत्मा वै जायते पुत्रः' इति न्यायेन परम्परया पित्र्यं रिक्थमिव तव पुत्रोऽधिकरिष्यति। तपः-समाधि-प्रपन्नब्रह्मशक्तेः पितुर्लोकोत्थानसमर्थः पुत्रो भवितेति सर्वेषां लोकपालानां सम्प्रतिपत्तिरेव मम मुखेन तुभ्यं वरः प्रहितः। तथापि नैता-वता परितुष्टाः सर्वार्थदर्शिनो देवास्तव पुत्रस्य वरुणकुले समुन्नयनं प्रथम-पद आवश्यकं मन्यन्ते। एतदर्थं शिष्यवृत्त्या ममान्तेवासित्वं प्रापयितुं स उपनयनकाले त्वया समर्पणीयः। वरुणालयनिवेशे तं प्रणीय शाश्वतीं विश्वोत्थानयोग्यतां प्रभुत्वं चोपहृत्य यथाकालं समावर्तयिष्यामीति।

वरुणस्यामृतायमानममोघं वचो निशम्य लब्धप्रसादः पुत्रसम्पत्तिरसा-विष्टो हरिश्चन्द्रस्तस्य प्रस्तावानुष्ठानस्यासौकर्यमविमृशन्नेव 'एवमस्तु' इति सत्यापितवान्। उभौ पुनर्दर्शनाय स्वस्वनिवेशाभिमुखं सहर्षं प्रतस्थाते।

तपसा कृशोऽपि हरिश्चन्द्रोऽयोध्याभिमुखः पुत्रलाभसम्भावनाफलेन निसर्गस्य प्रत्युद्गमन-सौरभेण च नवतां समवाप। तदा प्रत्यावर्तनपथे हरिश्चन्द्राय पृथ्वी सर्वत्र सुखशाद्वलानि विरचितवती, आपो निर्भिन्नकमल-कुमुदपुष्पप्रकरै रागं प्रापयन्, वायुवेगा वनोपवनानां द्रुमाणां शाखा आधूय शिरसि पुष्पाणि प्रावर्षयन्, दिवारात्रं च सूर्याचन्द्रमसौ रमणीयं मृदु प्रकाश-मदीपयताम्।

इति हरिश्चन्द्रस्य वरप्राप्तिर्नाम तृतीयं प्रकरणम्।

वरुणोपस्थानाद् हरिश्चन्द्रेऽयोध्यामुपावर्तिते प्रजाः परं प्रह्लादिता बभूवुः। तस्य सौमनस्येन प्रकटीभूतः कुमारसिद्धिप्रियोदन्तः स्वीयमेवाभ्युदयसाधनमिति प्रजाभिर्निकामं सुगृहीतम्। तस्य पुनर्दर्शनेन प्रजानां हृदयानि नयनानि च समं रेमिरे। पौरैः सर्वत्र नन्दितूर्यशङ्खमिश्रेण नान्दीनादेन मङ्गलमायोजितम्। नगरमण्डलं तदा सम्मृष्टसिक्तरथ्यं, पुष्पप्रकरशोभितं, पुण्यगन्धैः शीतैश्चन्दनरसैर्निषेवितं सङ्गीतकसमापन्नं च परं रञ्जकं सञ्जातम्।

सत्त्वसम्पन्नस्य पुत्रस्य प्राप्तये न केवलं स्वीयमपि तु सर्वासां प्रजानामपि तपःपूता सत्त्वसमृद्धिरपेक्षितेति वरुणवचनानुसारेण स शास्त्रविधिमधोविधं संकल्पयामास—

बहुकल्याणोदर्कमिच्छेच्च नृपतिः सुतम्।
प्रजानां ब्रह्मचर्येण सत्येन च तितिक्षया।
उपवासैस्तथेज्याभिर्व्रतैः कौतुकमङ्गलैः॥ इति

अपरं च—

'सत्त्वेषु सत्त्वमङ्कुरयति'। इति

एतदनुसृत्य हरिश्चन्द्रः सत्त्वशीलो मे पुत्रो वंशवर्धनोऽभिजायेतेति प्रजास्वात्मनि च भूयिष्ठ सत्त्वं वर्धयामास। सत्त्वेन मानवीयशरीरे ज्ञानेन्द्रियेषु प्रकाश उपजायत इति न्यायेन स सतां सद्भिः परिषत्सु आत्मानात्मविवेकविज्ञानं प्रदीपयामास। तदा सर्वेषां भूतानामैकात्म्यं पृथग्जनैरप्यनुभूतम्। लोकानां जागतिकव्यवहाराः शुद्धभावेन परस्पर सन्दीपिताः। 'सर्वे सुखिनः सन्तु' इति परस्परोदय-संकल्पः समुत्थितः। सर्वत्र प्रीतिसाम्राज्यं समुदितम्। निष्कामकर्मयोगः प्राभवत्। सत्त्वस्थाः समदर्शिनो ध्यानपदा लाभेषु हृष्टा अलाभेषु च व्यथिता न बभूवुः।

प्रजानां मङ्गलकामना शैव्याया अधिकुक्षि हरिश्चन्द्रस्य कुलाङ्कुररूपेण यथाकालं प्रादुर्बभूव। महाराज्ञी सत्त्वानुरूपं चक्रवर्तिलक्षणं शिशुं सुषुवे। कलकण्ठीकूजितेऽग्निविहारकाले प्राप्तपुत्रजन्मसंवादेन हरिश्चन्द्रेण सोऽग्नि-पर्यायो रोहिताश्व इति नाम्ना ख्यापितः। निष्पन्नजातकोचितकर्मा स स्तनन्धयो नूतनाभ्युदयोत्थापकाभिनवचन्द्र इवामृतस्निग्धरूपेण प्रमोद-निर्भरेण नयनाभिरामलावण्येन मृदुहास्येन च न केवलं पितरा अपि तु सर्वांल्लोकान् प्रहर्षयामास। बाल्ये पुनर्माङ्गलमृदङ्गमांसलध्वनिना, प्रसन्न-सिंहशावस्तिमितवीक्षणेन, मधुरकल्याणाकारेण च रोहितः प्रजाजनमानस कमलमिव रमयति स्म। कुलाचार्यो वसिष्ठः स्वयमेव आलोचितसंस्कारान् यथाकालं विधाय तस्य गुणगरिमाणं नित्यं वर्धयामास।

उपनयनकाले वसिष्ठप्रमुखैर्महर्षिभिर्वैदिकमन्त्रैः समाहूता देवाः समागच्छन्। तेषु प्रमुख आसीद् देवाधिराजो वरुणोऽनुबन्धानुसारेण रोहितं वरुणालयनिविष्टे स्वाश्रमे विनेतुकामः। तेन दृष्टं यद् रोहितो रसाभि-निवेशेन प्रजानां हृदयेषु सरागं सन्निविष्टस्ताभ्यः प्रत्यक्षं दूरीकर्तुं न शक्यत इति। किं करणीयमिति स विमृशन्नासांचक्रे।

हरिश्चन्द्रः स्वपुत्रमुपनयनकाले वरुणाय दातुं प्रतिबद्धो विमलात्मना तथा चिकीर्षुरपि प्रजानां रुचिं व्यभिचारयितुं नोदसहत। स वस्तुस्थितिं वरुणाय स्पष्टं न्यवेदयत्। वरुणः प्रत्युवाच--नात्र बहुशोचनीयं त्वया। यत्त्वमाकांक्षसि, तदेव भविष्यति। मम समीहितमपि युगपत् पूर्णतामे-ष्यति। कथं चैष परस्परं विपरीतविध उभयः सम्भविष्यतीति त्वया यथा-कालं ज्ञास्यते।

उपनयनविधौ 'अद्भ्यस्त्वा परिददामीत्याचार्यवचनमनु वटुः सरयूजले निमज्जत्युन्मज्जति चेति रूढिरयोध्यायां प्रावर्तत। अनेन वचनेन यदा रोहितो जले निममज्ज, तदा वरुणदूतैर्गृहीतः स वरुणालयं नीतः। तस्य स्थाने च मायोपकल्पितः प्रतिरूपरोहित उन्ममज्जेति सर्वमिदं मायोप-ज्ञस्य वरुणस्य प्राक्कलितयोजनया निष्पादितम्।

इति रोहितापहारो नाम चतुर्थं प्रकरणम्।

( ५ )

उपनयनकाले दिङ्मण्डलेभ्यः समागता परं नन्दिता ऋषयो हरिश्चन्द्रस्याभ्युदयायाशास्यानि पौनःपुन्येनोच्चरन्ति स्म। तत उत्तरं हरिश्चन्द्रमभिनवकर्तव्यपथे नियोजयन्तस्ते विबोधयामासुः—सुचरितैर्विश्वं भावयन्नभिरक्षया नृपोत्तमो विश्वराजो भवति। एतदर्थं स्वयमेव पर्यटन्, सर्वांल्लोकानात्मनि सन्निवेशयन्, विश्वेषामुच्चावचानां जीवनविधिं समेधयन् भवान् 'वसुधैव कुटुम्बकम्' इत्यादर्शस्य सम्यगाचारनिष्ठया प्रतिष्ठापनाय युज्यताम्। पितृत्वेन प्रजानां विनयाधानं भवतः प्रमुखं कर्म। सूर्यवंशीयचक्रवर्तिसम्राड्भिरादर्शीकृतेन धर्मविजयेन विश्वधारिणीं सुजलां सुफलां मलयजशीतलां विदधातु। भ्रमणकाले महात्मनामुपस्थानेन, तीर्थस्थलेषु महायशस्कानां सुचरितश्रवणेन च भवदीयः कार्योत्साहो वर्धिष्यते। ततोऽनायासेनैव नित्यं विजयवैभवमवाप्स्यति भवान्। ईदृशेन धर्मविजयेन भवान् जगदखिलमानन्दयतु' इति।

निर्जितषड्वर्गाणामेतेषां महर्षीणां नियोगो गुणोपेत इत्यवधार्य राजर्षिर्हरिश्चन्द्रस्तदनुसारेण किं करणीयमिति मन्त्रिभिः सम्मन्त्रयाञ्चक्रे। आगमवृद्धो मन्त्रिवरो वसिष्ठस्तस्मै प्रोवाच—राजन्, विश्वविजयस्तु स्वसैन्यबलैः पूर्वमपि बहुभिः प्रतापशालिभिः सम्राड्भिरनुष्ठितः। नायं दुष्करो भवतः, किन्तु विश्वस्य धर्मविजयोऽसाधारणं कर्म। तदर्थं प्रथमं साधनं विजेतुः सत्त्वमेव केवलम्। तत्तु सूर्यवंशीयानां चक्रवर्तिसम्राजां निसर्गोपात्तमेव। विशेषतो भवतस्तपस्समाधिभिः सत्त्वोत्कर्षो निकामं सुसिद्धः। मनुना प्रकृतं मान्धात्रा प्रथितं च मार्गमनुसरता भवतापि धर्मेण विश्वविजयो वरणीयः। अथ च भवतो दर्शनेन सत्त्वानुभावविशेषेण च लोकाः प्रभाविता एव सात्त्विकीं वृत्तिमूरीकरिष्यन्ति। भवतो राज्ये ज्ञान-

विज्ञानप्रयोगेण यदाध्यात्मिकं शिल्पशास्त्रात्मकं च परमौदात्त्यं प्रतिपदं प्रवर्तते, येन च प्रजानां सात्त्विकी वृत्तिः सुकरा जाता, तदेव विश्वसाम्राज्येऽपि सम्पद्येतेत्युद्दिश्य भूयोभूयः प्रयतनीयो भवता भवतोऽनुगामिभिश्च। इदं प्रयोजनमभिलक्ष्य देशे देशे भवदीयेन संवर्धनेन कुलपतिभिराश्रमाः संस्थापनीयास्तत्र च दूरदूराद् ज्ञानाचारशिक्षार्थिनः समागत्य वेदवेदाङ्गादीन् विषयान् शिल्पकलाश्चाधीत्य स्वेषु स्वेषु देशेषु ज्ञाननिधिं वितरन्तु। ज्ञानेन विनयोपेता लोका भूयसीं साधुवृत्तिं लभेरन्निति धर्मविजयस्य समुचितोपलब्धिरिति। अपरं च धर्मविजयस्य बहुविधं फलम्। तथाहि—लोके यत्किंचिद् वैषम्यं दृश्यते, तत् सर्वमधर्मेण जन्यते, या च सुषमा वर्तते, सा धर्मस्य फलम्। धर्मेणाधर्मः पराभवनीयः। ततो धर्मस्य राज्यं भवति, येन भूतग्रामः परस्परं रक्षति रक्ष्यते च। राजा तु मूर्तिमान् धर्मो भवति। स जगति सर्वत्र सर्वं सुखमयं विधातुं प्राणपणेन यतेत। धर्मराज्ये 'वसुधैव कुटुम्बकम्' इति सत्यं लोकानां सदाचारेण परस्पर-संव्यवहारेण च प्रत्यक्षीभवति। यथा कश्चित् पिता स्वकीयान् सर्वान् पुत्रान् समानरूपेण सुखयति, वर्धयति, शिक्षयति, संस्कारयति, समुन्नयति च, तथैव धर्मराज्ये धर्म एव पिता सर्वान् जीवलोकान् सुखयति समुन्नयति च। न हि तत्र जन्ममात्रेणोच्चावचत्वादिभेदभावो वर्तते। स्वचरितस्यौदार्येण कश्चित् पुरुषो महान् भवति धर्मराज्ये। यथा सूर्यः स्वरश्मिभिः सर्वान् प्राणिनः पालयति, तथैव सूर्यवंशीयो भवान् न केवलं मानवमपि तु सर्वं भूतजातं पालयतु।

धर्मराज्ये सर्वे लोका न स्वार्थं समीहितुमपि तु परार्थं साधयितुमेवात्मानमुद्योजयन्ति। कश्चिज्जनः स्वकीयेन महता श्रमेण कियन्मात्रमपरान् जनान् समुन्नयतीत्यनेन तस्य महिमा प्रमाणीभवति। परेभ्योऽधिकाधिकदानेन माहात्म्यं तस्य विजानीयात्। परेभ्योऽधिकाधिकग्रहणेन लाघवं विज्ञायेत धर्मराज्ये।

पुरा धर्मविजयेन भवदीयः पूर्वज आयोध्यको मान्धाता प्रख्यातश्चक्रवर्ती सम्राड् बभूव। अधुनापि तस्य कीर्तिमालिनी पराक्रमगाथा श्रूयते।

तस्याः श्रवणेनात्मानमूर्जस्वितमं प्रोन्नमयतु । तस्यादर्शो भवतः पथप्रदर्शनाद् वरेण्यः । स महात्मा धर्मक्षेत्रे कुरुक्षेत्रे नैमिषारण्ये चायजत । विश्व-विजयपथे पुण्याश्रमद्वयदर्शनं यथा स्यात् तथा भवता प्रस्थातव्यमिति ।

हरिश्चन्द्रो वसिष्ठस्योदारां रोचनां गां निशम्य प्रकाशितनीतिपथो विश्वविजय आस्थां निबध्य प्रथमं नातिदूरमिक्ष्वाकूणां तपोभूमिं प्रति प्रस्थानमनुमोदते स्म । तत्र के तेऽनुयात्रिका भवन्त्विति विनिर्णयो वसिष्ठोऽकल्पयत्—वेदवेदाङ्गपारावारीणा आचार्याः, शिल्पकलाभियुक्ताः, कृषि-पशुसवर्धनादिवार्तासु पारगमाः, आत्मोत्सर्गेण लोकाभ्युदयनिःश्रेयस-प्रवृत्ति–सन्धारकाः, त्रिविधतापहराः साधवः, जलप्रणालीभिर्निर्जलं प्रदेशमदेवमातृकं विदधानाः, पर्यन्त्रदाताः कर्मसचिवाः, मतिसचिवाश्च सहस्रशः सहचारिणो भवन्तु । इमेऽभिलक्षिता जना यथावश्यकं विविधजन-पदेषु तत्रत्यानां कृते परमरमणीयां स्थितिं कल्याणततिं च विधातुं संस्थान-विशेषान् निर्माय स्वस्वविद्योद्योगैर्ज्ञानविज्ञानं परम्परया शाश्वतं प्रस्थापयिष्यन्तीति ।

**इति विश्वविजय-स्वरूप-निर्णयो नाम पञ्चमं प्रकरणम् ।**

सा यात्रा वेदसम्पन्नैर्देवद्विजमहर्षिभिः समाकीर्णा नक्षत्रैर्द्यौरिवायता-वभासे। तत्र केचिद् सत्रंभाष्यविदांवरा धर्मार्थकुशलाः, केचित् महाव्रताश्च विविधकथाकदम्बकं श्रावयन्तो रेमिरे। रथशकटगजाश्वादिवाहनैर्विश्वस्य धर्मविजयाय नान्दीनादसमुत्साहितं शिष्टजनवृन्दं हरिश्चन्द्रानुगतिकं प्रययौ। दिनद्वयप्रगमनेन तटप्रदेशे चरन्तीनां गवां कोटिभिः शुभ्रायमाणा, मरकतहरितनीरे रम्यान्तरा, कलहंसीनां मधुरगीतैर्मनोहरा गोमती नदी दर्शनपथमागता। सा च नगाधिराजादूर्जस्वलानि तत्त्वानि समाहृत्य कृषो-वलानां क्षेत्रेषु वितरन्ती, निर्मलजलकणिकाशीतलेनानिलेन तटोपासकानां तापं हरन्ती, सुगन्धेन दिगन्तान् वासयद्भिर्नलिनवनषण्डैः पथिकान् प्रकामं रोचयन्ती, पुराणाख्यानं श्रोतुं मन्दं मन्दं वहन्ती, तटवर्तिलोकानां हृदयेषु सहजभावेनात्मनिदर्शनेन सर्वोदयादर्शं प्रतिष्ठापयामास। तत्र गोमत्या क्रोडीकृतं मुनिसाहस्राश्रयभूतं सत्ययुगादेव सततं लब्धप्रतिष्ठं, सहस्र-महायज्ञभूषितं, मन्वादिमहाराजानां तपस्स्थलं ब्रह्मर्षिचरितस्वाध्यायाधिष्ठानं नैमिषारण्यं तु

सुरभिकुसुमगन्धैर्वासिताशामुखानां
फलभरनमितानां वृक्षकाणां सहस्रैः।
विरचितपरिवेशश्यामलोपान्तरेखं
शमयति परितापं स्वागतानां जनानाम्॥

गोमत्याः पावनपरिसरे महात्मनां विभूतिर्विजयतेतमाम्। तत्र दावाग्नौ यज्ञार्चिः, पादपेषु यूपान्, पतत्रिकलरवेषु सामगीतानि, मृगेषु तापसान् निभालयन्तो मोक्षकामा जनाः समाधिपूर्वमध्यात्मदृशो निसर्गेण समुद्धताः।

वसिष्ठो हरिश्चन्द्रं तस्य पूर्वजानां नैमिषारण्यसंश्रयं स्मारयामास—

आनाकमेकधनुषा भुवनं विजित्य
पुण्यैर्दिवः क्रतुशतैर्विरचय्य मार्गम्।
इक्ष्वाकवः सुतनिवेशितराज्यभारा
निःश्रेयसाय वनमेतदुपाश्रयन्ते ॥ इति

परमश्रद्धया हरिश्चन्द्रः कृतस्वर्णपथां तां पुण्यमयीं भूमिमवलोकयामास, यत्र शताधिकैर्यज्ञैर्मान्धाता शतक्रतुमिन्द्रमतिचक्राम। तस्मिन् प्रदेशे प्राक्तनमुनीनामुत्प्रेक्षितं साह्य विदधानो हरिश्चन्द्रः पूर्वविद्भिर्व्याख्यातानि महासत्त्वानां चरितावदानानि शृण्वन् तपोधनानां रम्याः क्रियाः समवलोकयंश्च मासमेकमुवास। तस्मिन्नवधौ स तपोवनस्य परिसरे परिवार्यमाणान् तीर्थभूतानाश्रमान् मुनिभिः सह पद्भ्यां विचरन् सश्रद्धं ददर्श। सिद्धाश्रमं पर्यालोचयता तेन श्रुतं यदत्र मुनीनां षड्विंशतिसाहस्रं चतुर्वर्गोपायान् विममर्श। मिश्रके तीर्थे तेन महर्षेर्दधीचस्य दक्षयज्ञकालिकं व्रतमश्रूयत—

अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन।
देवतानां ऋषीणां च मध्ये सत्यं ब्रवीम्यहम् ॥ इति

सोऽयं दधीचोऽतिकायस्तेजस्वी, लोकसारः शैलगुरुर्भृगुणा विश्वहिताय विनिर्मित इति विजानन्निन्द्रो वृत्राक्रमणैः पुनः पुनर्व्याहन्यमानो नान्यथात्मनो रक्षणं पश्यन् दधीचचरणं सन्निपत्य तस्यास्थीनि वज्रं निर्मातुमयाचत। महर्षिर्देवकार्यार्थं प्राणत्यागेनास्थीनि दत्त्वा वृत्रासुरीयं विश्वव्यापिनं दुष्प्रभावं निराकरोत्। दधीचकथाश्रवणेन गृहीतशिक्षो हरिश्चन्द्रो लोकसंग्रहायात्मदानं विधातुं प्रतिजज्ञे।

इति विश्वविजयग्रन्थे नैमिषारण्यदर्शनं नाम षष्ठं प्रकरणम्।

नैमिषारण्याद् हरिश्चन्द्रोऽनुत्तमस्य स्वपूर्वपुरुषस्य मान्धातुस्तपोभूमिं कुरुक्षेत्रं द्रष्टुकामो निश्चक्राम। विश्वतो निसर्गविनीतेषु चराचरेषु भूतेषु विचरन् भूयिष्ठं रममाणो महात्मनां तपोधनानामाशीर्वचोभिरात्मानं प्रसादयन्, प्रजासत्कारं सहस्रगुणं प्रत्युपकुर्वन् लोकवार्तां साक्षात्कृत्य श्रुत्वा चात्मीयानां सहचारिणां विशेषनियोगेन यथायोगं शाश्वतीमभिवृद्धिं व्यवस्यन्, पृथग्जनान् स्वमहानुभावप्रकर्षेण संस्कारपथे विनयन्, सर्वेषां वर्णाश्रमाणां धर्मपरिपालनवृत्तिं सर्वत्र प्रतिष्ठापयंश्च हरिश्चन्द्रः प्रतिदिशं ललितललितं चन्द्रायते स्म।

मासेनैकेन परिभ्रमन् हरिश्चन्द्रो दृशद्वतीसरस्वत्योरन्तर्वर्तिनि कुरुक्षेत्रे प्रसिद्धतमं शिबेराश्रमं प्रत्युपस्थितः। सोऽयं राजर्षिर्ब्रह्मनियोगेन स्वपरीक्षार्थं समागतौ श्येनकपोतरूपा इन्द्राग्नी स्वौदार्येण परितोषयामास। श्येनस्योदरभरणार्थं स कपोतभरसमं मांसं स्वशरीरादुत्कृत्यार्पयन्, तस्य पूर्तिमदृष्ट्वात्मनः सम्पूर्णशरीरमेव तुलया धारयांचक्रे। 'शिबेः परीक्षया प्रभावप्रकर्षोद्बोधेन लोकः परोपकारपथं पुण्यतमं स्वीकुरुते' इति हरिश्चन्द्रस्य सर्वातिशायिनी वृत्तिर्बलीयसी बभूव।

पुरा हरिश्चन्द्रस्य पूर्वजोऽखिलभूपरिरक्षणस्थो मान्धाता तत्रवार्चीकपर्वतेऽयजत। स विश्वस्य धर्मविजयमन्वतिष्ठदिति गाथां हरिश्चन्द्रः पुराविद्भिः प्रगीतां पुनः पुनः शुश्राव—

पृथिव्यां सन्ति ये धर्मा मया सर्वे समादृताः।
एकराजोऽस्मि संवृत्तो मनुधर्मविवृद्धये॥
धर्मविजय इत्यसौ विश्वं येन मया धृतम्।
विश्वव्यापि-हितान्वेषि-प्रवृत्तिपरिकल्पनात्॥

धर्मेण विश्वसंश्रयं कृत्वा स्मः पुण्यकामिनः।
अस्माकं हि कुले जाता धौरेयाश्चक्रवर्तिनः॥
निवापाञ्जलिदानेन पूर्वान् पूर्वान् नृपान् सदा।
तर्पयिष्यन्ति योग्यत्वादित्यस्माकं मनीषितम्॥

'धर्मविजय इत्यसौ विश्वं येन मया धृतम्' इति वचनानुसारेण स राजा हरिश्चन्द्रः स्वानुयायिनो ज्ञानविज्ञानधिषणान् लोकस्वस्तिसम्पादनसमर्थान् शिल्पकलानिष्णातांश्च जनान् स्वस्वबुद्धिवैभवसंस्कारेण तत्र तत्र राज्ञामनुवर्तनेन च विश्वं यथायोग्यं समुद्धर्तुं दिशि दिशि प्रेषयामास। सूपायनास्ते महामानवा अतिरागेण विश्वहितायात्मानमुत्स्रष्टुं राजशासनं च सभाजयितुं लोकलोकान्तरं परिभ्रमन्तो यथायोगं सर्वेषु लोकेषु इष्टापूर्तानि सम्पादयन्तः, आचार्यकुलानि संस्थापयन्तश्च जनपदेषु बहुविधनूतनोद्योगायोजनेन श्रीविलासमुन्नयन्तः सर्ववर्णाश्रमाणां चतुर्वर्गोपलब्धये यथापेक्षं साधनानि परिकल्पयन्तः, संभरन्तश्च, महापथेषु वृक्षारोपणेन, जलाश्रयविधानेनातिथिगृहनिर्माणेन च सप्तद्वीपां वसुधां धामवतीं विदधाना विचेरुः। तेषामाकारे प्रज्ञायामागमे कार्यविधौ, उदये च किञ्चिदलौकिकं शान्तिसौरभं विभावितं, येन प्रसक्तं विश्वजनमहमहमिकया तेषां सर्वस्वं ज्ञानविज्ञाननिधिमात्मसात्कृत्य शाश्वतमन्योन्यस्मै तस्य प्रदानेन विश्वतः समवर्धत। अत एव धर्मेण लोकरक्षणमभ्युपेतम्।

इति विश्वविजयो नाम सप्तमं प्रकरणम्।

त्रैलोक्यस्य वैषम्यं निवारयितुं त्रिभुवनपतयो ब्रह्माविष्णुशिवादयो नितरां ध्यानपराः सन्ति। ब्रह्मणः सूनुर्नारदो भुवनत्रयभ्रमणेन लोकवृत्तं संगृह्य यथायोगं मेरुशिखरे ब्रह्मादिकं निवेद्य ब्रह्माण्डस्य सुपथसञ्चारणेनात्मानं कृतार्थयति। सत्ययुगावसाने त्रेतायां लोकाः कथं विहरन्तीति जिज्ञासया परिभ्रम्य स मुनिः परावरज्ञं ब्रह्माणमभ्युपेत्य स्वमनोगतमुवाच—तात, युगान्ते सति न प्रतिफलति कृतयुगस्य छाया। सत्ययुगे सर्वाः प्रजाः सदायतनाः सत्यप्रतिष्ठाः, पारमिताप्रपन्नाः, पारमार्थिकाश्चासन्। लोकः सत्यमात्मानं कुरुते स्म। सत्यमासीत् सर्वेषां भूतानां मधु। किन्तु सत्यं विनाधुना प्रभूता जनाः सत्पथाच्च्यवन्ते। भवता प्रभो सर्वे लोका धर्मनिकेतनीकृता, यत्र सर्वं सर्वेषामुपभोगाय स्यात्। नासीत् तत्र किमपि कस्यचिदेकस्य। अत एव सर्वे निकामं पूर्णा आसन्, परान् सर्वान् यथासुखं सम्भरन्तश्च भूमानमनुबभूवुः। त्रेतागते लोक एतासां सद्वृत्तीनां विपर्यासो वर्धते। लोकप्रमक्षं विशिष्टादर्शानां सम्प्रतिष्ठाधुना सम्प्रतीष्यते। तेषामभावे सति मानवलोके क्वचिद् दुर्भिक्षं भवति येन सन्त्रस्ता जनाः स्वसन्ततिमपि विक्रीय जीवनयात्रां साधयितुमवशा इवाचरन्ति। क्वचिद् राजापि कामेन प्रपीडितः परिग्रहायोग्यां मनआपां रमणीं कलत्रीकरोति। तत्र का कथा पृथग्जनानाम्, ये भोगान् प्रति भ्रमरायन्ते। अपरं च क्वचिद् धर्मसाधनीभूता गा बलाद् ग्रहीतुकामा राजानः प्रपतनपथं पुरस्सरन्ति। दुश्चारित्र्याभिभूतास्ते शापेनास्तंगमितमहिमानश्चाण्डालीक्रियन्ते। अस्यां स्थितौ महतां निदर्शनस्य सम्प्रतिष्ठया रजोगुणसमुद्भवौ कामः क्रोधश्च निरुद्धौ यथा भवेतां, तथा भवता जगत्तापनिवारण-बुद्ध्या निष्पादनीयमिति।

नारदस्य वचः परमार्थेन गृहीत्वा तत्र मानवलोके कश्चिदपचारो वर्धत इत्यनेन क्षणं संविग्नमानसो विधाता किं करणीयमिति विमर्शमुद्दिश्य "सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषायेति नीतिमनुसरन् ध्यानयोग-संचारितेन संवादेन ब्रह्मसंसदो देवर्षिपुरोगान् सदस्यानकेतयत्। सर्वे ते समागता अचिरमेवादिदेवं मण्डलायमाना न्यविशन्त । तेषामुपस्थित्या सत्त्वोद्रेकेण ब्रह्मलोकः समष्टिशो नितरां वैपुल्यमवाप। ब्रह्मा तेषां पुरतः ससारं नारदवचःसारं पुरस्कृत्य लोकः सत्पथान्मा विरजेदिति सापेक्षोपायं प्रस्तावयितुं तानधोविधं सम्बोधयामास—महती खलु मे चिन्ता लोकानां व्युत्थानाय। एतदर्थमुच्चावचलोकान् साक्षाद् द्रष्टुं नारदो मया न्ययोजि। तस्य सूचनानुसारेण पुराकल्पानां महात्मनामादर्शान् विस्मृत्य मानवलोके महाराजा अपि क्वचिच्च्यवन्ते सत्पथात्। यथा राजा तथा प्रजेति शाश्वत-विधानमनुसरन्तः प्रजावर्गे बहवो जनाः सत्त्वे सत्पथे चोदासीनाः प्रति-भान्ति। फलतश्चतुर्दिशं चारित्रिकप्रदूषणं सुसहमेवोपेक्ष्यते इति भवता-मेतत् सुविदितमेव। तथापि मम प्रेरणया कार्यगौरवेण च समुत्साहिता भवन्तो यथायोगं निर्वहणार्थं समुद्यता भवन्तु। भवन्तः स्वत एव सम्यग्-विचार्य समीचीनं नीतिपथं विनिर्णीय मह्यं प्रतिबोधयन्तु, येन तदनुसारि-कार्यान्वयनमधिकुर्यामिति।

एतावदुक्त्वा ब्रह्मा देवर्षीन् कार्यविषयकोहापोहे संयोज्य स्वयमपर-लोकानां शासनव्यवस्थाधिकारमध्यवसातुमन्यत्र जगाम।

सदस्या देवर्षयो मानवलोकस्योन्मार्गगमनोदन्तं प्रागेव कर्णोपकर्णिकयाकर्ण्य ब्रह्ममुखादपि तं स्पष्टतरमवगम्य तदनुपृच्छां परस्परं गाम्भीर्येण विमृशन्तः स्वमनीषितं समर्थयितुं ब्रह्मक्षत्रप्रतिनिधीभूताय विश्वामित्राय निवेदयाम्बभूवुः—भो ब्रह्मर्षे, युगेऽस्मिन् मानवलोके सूर्यवंशी-यानां सम्राजां विनयाधानात् सतां समृद्धिरल्पप्रभामधिकरोति। यदि नाम सत्त्वादीनामात्मगुणानां प्रचयो न विधास्यते, तर्हि सत्त्वप्रकाशः क्षयिष्यते। भवांस्तु सूर्यवंशस्य संवर्धकस्तथा प्रयततां, यथा लोके तस्य सम्राजां सत्त्वावदानं नित्यमुपचीयेत। एतदर्थं सम्राजां सत्त्वोत्कर्षो ब्रह्मबलेन साधनीयः। अधुनातनं भुवनत्रयतिलकं महाराजं पुंरत्नं हरिश्चन्द्रं भवान्

भूयिष्ठमुच्छ्रयेद्, येन यावच्चन्द्रदिवाकरौ तस्य सत्वप्रकाशोऽखिललोकं सत्पथं दर्शयेत्। स एव सत्यस्य रक्षणाय सम्यक् कल्पते। प्रकरणेऽस्मिन् भावियोजनाविधानं भवानेव ब्रह्मणः परामर्शेन निश्चेतुमर्हतीति।

विश्वामित्रः कार्यभरस्य गुरुतां सम्यग् विजानाति स्म। स देवर्षीणां सम्मतं ब्रह्मणे निवेद्य 'किं करणीयं मयेति प्रयोजनमुद्दिश्य तदनुग्रहकाम्यया प्रार्थयते स्म। ब्रह्मा प्रोवाच—महामुने, गुणाकरस्य हरिश्चन्द्रस्य सत्त्व-प्रकाशस्तु लोके विदित एव। सूर्यवंशीया राजानो धर्मचक्रप्रतीकात् सूर्या-देव सतः पुरोगतिं लब्ध्वा सत्यपरायणाः संराजन्ते। हरिश्चन्द्रस्यैतर्हि समुन्नयनं तु भवत एव भर इति देवर्षिभिः साधु निर्णायि। केन प्रकारेण भवतैतन्निष्पादनीयमिति न केवलं हरिश्चन्द्रस्यापितु भवतोऽपि दुःसाध्यः पन्थाः। भूयिष्ठेनापि केवलेन ख्यातिमात्रेण हरिश्चन्द्रस्य सत्यपरायणता लोकान् न प्रभावयिष्यति। दुःसाध्यपरीक्षया निकषितं शाश्वतमेव लोकान् समुद्धरिष्यति' इति योगदृष्ट्याहं प्रत्यक्षमिव प्रपद्ये। पुराकल्पेऽपि शिबि-दधीचादीनां महात्मनां प्राणपणं परीक्षणं लोकोद्धरणहेतुना देवैर्मम निर्देशे-नानुष्ठितम्। तेषां चरितगाथा न केवलं गीयतेऽपितु सर्वकालं सत्पथ-गामिभिः सोत्साहसंकल्पेन मनसा ध्रियते। अत एव त्वरतां भवान् देवैः सह लोकसंग्रहकाम्यया हरिश्चन्द्रस्य सत्पथे परीक्षणायेति विश्वामित्रोऽपि 'यथानियुक्तोऽस्मि तथा करिष्यामीति प्रतिश्रुत्य निर्जगाम।

'आत्मगुणैः पृथिवीं मण्डयतो हरिश्चन्द्रस्य परीक्षणं तु मम यशः क्षाययिष्यति, तथापि तथाविधं तस्य योग्यतां विलोक्य भूयसां विश्वतः समुन्नयनं प्रतीष्यमाणेन ब्रह्मणास्मिन् कर्मणि नियुक्तोऽस्मीति मनसा दृढं सन्धार्य विश्वामित्रस्तस्यादेशं शिरोधार्य देवानां साह्येन हरिश्चन्द्राय विपदामतिप्रबन्धं विधातुं तस्य राजधानीमयोध्यां प्रतीयाय।

इति हरिश्चन्द्र-परीक्षासंकल्पो नामाष्टमं प्रकरणम्॥

धर्मविजयानन्तरमयोध्यायां क्रमयोगेन हरिश्चन्द्रो यथाविधि भूरिदक्षिणं क्रतुराजं राजसूयं प्रचक्रमे । धर्मविजयस्य प्रभावेण—

'नृपे दीक्षां प्राप्ते जगदिव समं दीक्षितमिव' ।

एतदर्थं प्रसङ्गतः पृथिवीमण्डलस्य सर्वेषां राष्ट्राणां महीक्षितः स्वीयप्रजानां केनचिदभिनवेनोत्साहेनाधिगतां ज्ञानविज्ञानोपलब्धिं हरिश्चन्द्राय साक्षाद् विज्ञापयितुकामास्तत्तद्विषयाणां विशेषज्ञान् तेषां कलाकृतीश्च समानेतुमामन्त्रिताः । तत्र चतुष्षष्टिकलागमप्रयोगविदां सर्वोत्कृष्टकृतयः प्रदर्शनीषु स्थापिता न केवलं लोकरञ्जिका बभूवुरपि तु प्रतिभोन्मेषयुतानां शिष्याणां प्रशिक्षणाय बहूपाकुर्वन् । पण्डितपरिषदि विद्वद्भिः स्वस्वविद्याविशेषेष्वसमाहितशङ्का अन्येषां विशेषज्ञानामनुग्रहेण समाधायि । कलाकलापालोचनकठोरमतयः संगीतनृत्यनाट्यविदः पौराणिकाः, इन्द्रजालिकाः मल्लाश्च स्वकलानां विशेषैः प्रयोगैः प्रतियोगितासु सर्वेषां वर्णाश्रमाणां जनता वनवासिनश्च रञ्जयन्ति स्म । महाजना आवसथ–गणचक्रक–पानारोग्य–व्यवस्थया सुखं राजसूयमुपतस्थिरे । तत्र—

ऋत्विजश्च यथाशास्त्रं राजसूयं महाक्रतुम् ।
हरिश्चन्द्रस्य सान्निध्ये जुहुवुः सर्वयाजकाः ॥

उपात्तयज्ञो हरिश्चन्द्रो दानदक्षिणादिकमभीष्टात् पञ्चगुणं प्रददौ । तस्य राजकोशजातं निश्शेषं सर्वगतं बभूव । तदनन्तरमवभृथेनोपाध्यायामात्यप्रकृतिजनसमक्षं तस्य सम्राट्पदेऽभिषेकस्य क्रमः समारब्धः । तस्मिन् क्षणे तडिदिव समापत्य तत्रोग्रतेजा अपि किंचिन्निश्श्रीक इव विश्वामित्रः कुलपतिर्दक्षिणार्थी 'अहमागामिति तारस्वरेणोज्जहार । सर्वे राजानः पीठा-

धिकारिणश्चासनादुत्थाय तस्मै स्वागतं व्याजह्रुः। 'अस्माकं परमसौभाग्येन ब्रह्मक्षत्रनिधिरयं महामुनिर्नेत्रातिथिः संजातः। पुण्यं हि नामग्रहणं महामुनीनां किं पुनर्दर्शनमिति प्रशंसन् सपरितोषं हरिश्चन्द्रोऽर्घादिकं पूजा-सामग्रीं तस्मै समर्पयामास। महर्षेः कुलरक्षणार्थं लक्षं स्वर्णमुद्रा देहीति स कोशपतिमादिदेश।

कोशपतिस्तु भृशमुद्विग्नो राजानमुपांशु सूचितवान्—राजसूये सर्वस्व-दानेन जीवनसाफल्यमवाप्नुयादिति न्यायेनाधुना 'शरीरमात्रेण भवा-ञ्शोभते। महादेव्यपि सयौतकं सर्वस्वदानेन कृतकृत्या वर्तते। तर्हि केन-चिदन्येनोपायेन ब्रह्मर्षेर्दक्षिणा पूरणीयेति। अर्थसंकटेन वैषम्यापन्नोऽपि हरिश्चन्द्रः प्रसन्नमुख ऋषिं प्रत्युवाच—"न लक्षेणैव भवतोऽभ्यर्हणं सम्पत्स्यते। स्वराज्यमेव समग्रं भवतः कुलपालनाय समर्पयामि। बृहत्तमेन सम्प्रदानेनाचार्यकुलस्याक्षया सिद्धिर्भवतु' इति।

प्रतिभामुखो विश्वामित्रोऽसहमत एवोच्चैर्विहस्य बभाषे—याथार्थ्य-विरहितं विवेकविश्रान्तं चाभिहितं भवता। न सन्त्यस्मादृशा निर्जिते-न्द्रिया राज्यकामाः। अपि च राज्यं तु पुरा त्यक्तमेव मया ब्रह्मपदहेतोः। अन्यच्च—नास्ति भवतोऽधिकारो राज्यदाने। वस्तुतः —

भुङ्क्तेऽजस्रं नृपो राज्यं प्रभावात् प्रकृतेर्ध्रुवम्। इति

अत एव प्रजानामेवाधिकारो राज्ये प्रतिपन्नः। राज्यं तु प्रजाभिः सह भवतो भृतिवृत्त्या भोगाय न तु दानाय वर्तते। प्राक् प्रतिश्रुतं स्वीयं लक्ष-मेव मह्यं प्रतिपादयतु। न खलु समाश्रितनृपाणां मन्त्रिणां वा प्रजानां वा धनं दक्षिणारूपेण ग्राह्यं मयेति।

हरिश्चन्द्रो मुनिवचनं सादरं प्रतिगृह्य तस्यार्थनिबन्धेन निगृहीतः प्रणत एव प्रत्युवाच—धन्योऽस्मि ब्रह्मर्षे भवतः साधुप्रवचनेन। समुदाचारपथः कृपया भवता मे प्रदर्शितः। सप्ताहावधौ लक्षं दास्यामीति।

हरिश्चन्द्रस्य प्रतिश्रुतिविचनं विश्वामित्रः स्वकार्यसिद्धिजननं निशम्य मनस्यचिन्तयत्—सम्यङ् निर्वहामि ब्रह्मनियोगमिति। हरिश्चन्द्र एवमभ्युपेत्य प्रसन्नमनसा भाविजीवनोद्योगविधिः पुरुषकारगौरवेणैवोपपाद्य इति मेने। विश्वामित्रो यथायोगं विहर्तुं निश्चक्राम।

इति हरिश्चन्द्रस्य विश्वामित्राय
लक्षदानप्रतिश्रुतिर्नाम नवमं प्रकरणम् ॥

## ( १० )

कुलपतिदानविषयक-विसंवादेनोन्मनायमाना आयोध्यका विपत्तिकरं विश्वामित्रमपवदन्तः परस्परमूचुः —नायं विश्वस्य मित्रम्, अपि तु वस्तुतो विश्वेषाममित्र एव महाशत्रुरयं कूटनीत्यास्माकं राजराजं न्यक्करोति। नायं ब्रह्मर्षिविश्वामित्रोऽपितु जिह्मोऽर्थपिशाचो राक्षसो महाडम्बरो विश्वामित्ररूपधरश्छद्मतापसः पाषाणहृदयः सतां समृद्धिसुखमपहर्त्तुमस्मान् सर्वान् विप्रलब्धुं च समागतः। सावलेपमयं जनः प्रजाकाक्षां न गणयतीति।

विश्वामित्राय प्रतिश्रुतं दानं कथं देयमिति परामष्टुं हरिश्चन्द्रः सत्वरमेव मन्त्रशालां प्राविशत्। तत्र सङ्गतान् मन्त्रिणः सोऽन्वयुङ्क्त-सप्ताहावधौ दक्षिणा कथं प्रदेया महर्षय इत्यस्मिन् विषये भवतां का मतिरिति। प्रत्युत्पन्नमतयोऽपि मन्त्रिणो विषण्णवदना दक्षिणाराशिमर्जितुं कमप्युपायं राजानं प्रतिबोधयितुं विफलविमर्शा बभूवुः। सैन्यबलेन धनावाप्तिर्विश्वप्रतिष्ठापितधर्मविजयस्य विपर्ययो भविष्यतीति सर्वेषां मन्त्रनिर्णय आसीत्। सर्वसम्मतेन ते राजानं प्रत्यूचुः यत् कर्तव्याकर्तव्यनिर्णये सन्देहास्पदे सति भवान् स्वीयान्तःकरणप्रवृत्तिमेव प्रमाणीकरोतु। न वयं विषयेऽस्मिन् समर्थाः।

वैषम्यसखो हरिश्चन्द्रोपि 'राज्ञां तु चरितार्थता दुःखोत्तरैव', अपि च—पुण्यवन्तो हि दुःखभाजो भवन्तीति न्यायेनात्मानं बहु मेने। स्वजीवनस्याभिनवोद्योगेऽसहायोऽपि सोऽभिनवोत्साहस्फूर्तिमन्वभवत्। मुनेर्व्यवधानेन सम्पातितं वैषम्यं कल्याणोदर्कमिति तस्य मतिरासीत्। तेन पुनर्विचारितम्—'महात्मनां प्रवृत्तयः स्वप्नेऽप्यश्रेयो न विधत्ते। पुरा मम पितुः कृते देवानां विरोधे सत्यपि ब्रह्मर्षिणा विश्वामित्रेणापरं स्वर्गमेव स्रष्टुं प्रचक्रमे' इति।

आत्मसिद्धयर्थं कुत्र गच्छेयमिति विमर्शे उपस्थिते हरिश्चन्द्रेणाविलम्बं विनिर्णीतम्—काशीं वा कैलासं वा, यत्र शिवस्य शरणमानन्त्यमेव लोकोत्तरोपलब्धिः। किन्तु कैलासे मानवव्यापारशून्यत्वान्ममार्थाभिलाषो न पूर्येत। काश्यां पुनरकिंचनः शिवो मादृशामकिंचनानामुपस्थानं बहुमंस्यते, सौमनस्यं च प्रकृत्या वितनिष्यति। अथकिम्—शिवो नग्नस्तिष्ठति, तं संवीतदिव्यांशुका देवा नमन्ति। स वृद्धवृषेण प्रीतो याति, तमैरावतारूढो देवेन्द्रः सेवते। स कपालशकलैरात्मानमलंकरोति। तं समागत्याक्षयनिधिः कुबेरः स्तौति। दुर्गतिप्रपन्नोऽपि भगवाञ्शम्भुर्विभुत्वस्य परमं पदम्। दर्शनमात्रेण शिवो मे राज्यभोगादधिकतरां रमणीयतां सम्भरिष्यति। तस्योपस्थानेन काश्यां निःसीमं सुखोदयं मन्ये भाविजीवने। तत्र शिवसंकल्पेन मम मनीषितं स्वार्जनेन विश्वामित्राय दक्षिणाराशिप्रापणमिति नावहेलितं भविष्यति। अतएव काशीं प्रति महायात्रां विधास्यामीति।

हरिश्चन्द्रः स्वपत्नीं शैव्यां पुत्रं रोहितं चामन्त्रयितुं निशान्तं प्रविवेश। शैव्या तु प्रतिपलं पत्युर्विचारसरणिमन्वियेष। सा तं दृष्ट्वा—'जयत्वार्यपुत्रः' इत्यभिनन्दितवती। हरिश्चन्द्रस्तां विमुक्तालङ्कारां समीक्ष्यापृच्छत्—कुत्र गतास्तेऽलंकारा इति। शैव्या प्रत्युवाच—सर्वस्वदानविधौ राजकोशे निःशेषतां गते सर्वाण्याभरणान्यपि मया ब्रह्मसात् कृतानीति। विश्वामित्राय दानराशिमर्जितुं काशीं गमिष्यामीति राजाभिप्रायं निशम्य 'अहमपि सहचरी भवितुमुत्सहे भवतोऽनुज्ञयेति तं न्यवेदयत्। हरिश्चन्द्रः प्रत्युवाच—अयि साहसिके, अयौक्तिकस्ते प्रस्तावः। कथमेतत् सम्भविष्यति। 'असूर्यंपश्या राजदाराः। नासि त्वमध्वनीना। कथं त्वमाकाशीं पद्भ्यां ग्रामाद् ग्रामं पर्यटिष्यसीति। शैव्या सविनयं प्रत्यवेदयत्—न स्पृशति मामिदानीं राजदारोपाधिः। स तु भवत ईशभावेन सह मामहासीत्। अहं त्वार्यपुत्रस्य सहधर्मिणी एवोत्तमव्रतार्धाङ्गिनी वर्त्ते। आदौ मम भृतेर्निष्क्रयेण मुनये धनं पूरयत्विति प्रथमः कल्पः। अन्यच्च, यदि भवतो भृतिनिष्क्रयेण पूर्णं धनं न लभ्येत, तर्हि शेषधनस्य पूर्तिं कथं करिष्यति भवान्?

अत एव मम सहगमनं तु नितरामुचितमपेक्षितमेव। मार्गे प्रतिपथं कण्टका-न्यपसारयन्ती प्रतिपदं च परामर्शदात्री अहं सम्भूय सम्पत्तौ च विपत्तौ चैकरूपा सहानुभूतिशालिनी वर्तिष्ये। भवदीयोपकारेणाह कृतकृत्यमात्मानं मंस्ये। अत्रभवति प्रोषिते कथमहमयोध्यामुपवत्स्यामि मन्दभागा। पुरा साध्वीमनस्विन्यः पतिभिः सह राजभवनं परित्यज्य तस्य साह्यमाचरन्। श्रुतमेव भवता सावित्र्याश्चरितम्। सा स्वपतिं सत्यवन्तं मरणानन्तर-मप्यन्वगच्छत्। तस्य प्राणान् यमादाहृत्य सा प्रातःस्मरणीया सौभाग्यवती बभूव। विवाहानन्तरमभ्युदयं गताहं पत्यू राज्याद् विवासनेन कष्टं गता पुनर्विपदन्तेऽभ्युदयात्मकं श्रेयो लप्स्य इति पितुर्गेहे सिद्धादेशेभ्यः श्रुतं मया। इयं सा घटनाततिः पूर्वनियोगेन मामनुसरति। पदयात्रायामा-वाराणसीं भवतः पृष्ठतो गच्छन्त्याः कष्टं मे न भविष्यति। भवता सह कण्टकिनोऽपि द्रुमास्तूलाजिनसमस्पर्शा मां सुखयिष्यन्त्येव। मार्गे वनान्त-गोचराहं शाद्वलेषु शयिष्ये। स्वल्पमपि पत्रं पुष्पं फलं मूलं यद् भवान् दास्यति, तदेवामृतोपमं सुस्वादु मयाशिष्यत इति। कथं कथमपि हरिश्चन्द्रः शैव्यायाः सहानुगमनमनुमेने।

इति काशीप्रस्थानाय परिवारामन्त्रणं नाम दशमं प्रकरणम्॥

( ११ )

विश्वामित्राय सप्ताहे देयं धनं संग्रहीतुं हरिश्चन्द्र ईशपुरीं श्वः प्रस्थास्यत इति वार्ता तडित्त्वरं पौरजानपदेषु परिव्याप्ता । राजगुणरतास्ते पर्यांकुला स्थाने स्थानेऽभिसम्पत्य परस्परं विचारयन्तश्चुक्रोशुः —सर्वं विपरीतं परिणमति । न वयं हरिश्चन्द्रं विना जीवतुमुत्सहामहे । राजन्यप्रतिष्ठिते कुतोऽस्माकं प्रतिष्ठा । तेन सहैवास्माकं जीवनं मरणं वा भवतु । स वस्तुतोऽस्माकं यादृशः प्राणाधारस्तादृशोऽन्ये सम्बन्धिनो बन्धुबान्धवाश्च न सन्ति । वयमपि तेन सह काशीं वा वनं वारण्यं वा मरुदेशं वा गमिष्यामः । हरिश्चन्द्रेण सह वनमयोध्यातो भूयो भूयः सुखाढ्यम् । तं विनेयं नगरी श्मशानवदस्मान् भीषयिष्यति, सुप्रिया अपि प्रतिवेशिनः प्रेतायिष्यन्ते च । नाराजके जनपदे श्रियो वसन्ति । यदि नाम हरिश्चन्द्रसदृशः सत्यवचनरक्षणपरः सौजन्यमूर्तिराशापिशाचिकाग्रस्तस्य प्रतिनिवेशनिष्ठस्य विश्वामित्रस्य दुराग्रहेणास्तंगमितमहिमा, व्यसनप्रधूपितः, पीडितः स्यात्, तर्हि वृथैव धर्मचर्या । अरण्येतिलका इव सदाचारो निरादरिष्यते । तस्य दुःखेन दुःखिताः सर्वे पौरजानपदा धर्मवृत्तेर्निस्सारत्वं समीक्षमाणा शीघ्रमेव हिंस्रजन्तुभिः समानाः परस्परमुद्वेजयिष्यन्ति । स्वर्गादपि गरीयो हरिश्चन्द्रराज्यं नरकायिष्यते । यदा राजा मुनिदानवचनरक्षणार्थमस्मान् परित्यज्यान्यत्र गमिष्यति, तदा कथमस्माकं रक्षा भविष्यति । राज्याभिषेकविधौ किं न महाराजेन प्रतिज्ञातमासीद्यद् यावज्जीवं प्राणपणेन प्रजाः परिपालयिष्यामीति । एकस्याः प्रतिज्ञायाः प्रतिघातेनान्यस्याः प्रतिज्ञायाः पालनं नैवोपद्यते । अथवा कीदृशीयं राजनीतिर्यया राजा कपटमुनिवचनेन वञ्चितः स्वराज्यं त्यक्तुं बाध्यते । किं न स लोककण्टको निष्ठुरो मुनिः प्रतीक्षितुं निवेद्येत, यदधुना सर्वस्वमेव मया

दत्तम्। भविष्ये यदा मम धनं भविष्यति, तदा दास्यामि। वस्तुत एतादृश उपद्रवी महर्षिरपि नार्हति काकणीमपि दानरूपेणेति।

स्वीयापायेन पर्युत्सुकाया प्रजाया एतादृंशि आक्रन्दवचांसि श्रावं श्रावमप्यप्रकम्पो हरिश्चन्द्रः कथं लोकान् प्रतिबोधय इति चिन्तया विशीर्णः समजायत। तथापि दृढव्रतः स प्रजापालनविषयकव्रतभङ्गे सत्यपि साम्प्रतिकं मुनिदानवचनमक्षुण्णं प्रतिपालयितुं भृशं निश्चिकाय। पौराणामात्मना सहायोध्यातो निर्गमनयोजनां कर्तव्यपथे महद् व्यवधानं प्रतीत्य स तान् नगरपरित्यागकल्पान्निवर्तयितुं समाश्वासयितुं चापोहेनोच्चगिरं संबोधयामास—नाहं भवतः परित्यज्यायोध्याया बहिर्वस्तुकामोऽस्मि। इह लोके परलोके वा यत्र कुत्रचिद् गमिष्यामि, तत्र भवन्तोऽपि सर्वशो मया सह स्वपुण्यबलेन ममापि पुण्यबलेन च गमिष्यन्तीत्युद्दिश्य नित्यमेव प्रजापालनव्रतं तपोमयमनुष्ठीयते मया। प्रजानां सम्यगाप्यायना यथा भवेत्तथाहं यावज्जीवं प्रयतिष्ये। किन्तु नहि निर्बाधं प्रवर्तते लोकपालानामपि अभीप्सितैषणोद्योगः। श्रेयांसि बहुविघ्नानीति न्यायेन वर्त्तमानविघ्नोऽस्माकं भाविसमुदयस्य द्वारमेव। यन्मयाद्यावधि भवतामभ्युदयाय कृतं ततोऽपि स्पृहणीयतरमपरं किञ्चिन्नव्येन तपोयोगेन स्वानुगस्थिता अप्यहं कारयिष्ये, यतो भवतां समेषां निर्बाधमेव मया सह न केवलमिह लोकेऽपि तु परलोकेऽपि सद्गतिर्ध्रुवा भवेत्। यथापूर्वं भवन्तो ममानुरोधेन विहरन्तोऽयोध्यायां वसन्तश्च ममाभीष्टोद्योगपरिणतभावास्तौ मनसा वाचा कर्मणा सह युञ्जन्तु। अयमेव प्रजाधर्मः राजधर्मश्च। वस्तुतो धर्मो रक्षति रक्षितः। नाहं प्रतिज्ञापथान्मनागपि विचलितुं प्रजाभिः प्रार्थनीयः। प्रतिज्ञापारणमेव मे व्रतम्। भवतु स ब्रह्मर्षिर्विश्वामित्रो ऋषिगन्धिको वा कापटिको वा, नाहं तस्मै प्रतिश्रुतं दानं क्षगमप्यप्रदेयं कर्तुं स्वप्नेऽप्युत्सहे। सत्यमेव मे कुलव्रतम्। तच्च मया मम पौरजानपदैश्च रक्षितं यथाकालं मां भवतश्च सर्वानिहामुत्र शाश्वतं रक्षिष्यतीति श्रद्दधतु। यदि नाम सत्यं न भवेत्तर्हि अस्माकं जीवनमेवासत्यमनृतं मृतमेव स्यात्। एषा मम राजनीतिर्यया न केवलमहमपि तु सर्वा मम प्रजा नित्यं

राजमाना गाथासु गीयमाना लोकानुद्धरिष्यन्ति। अनुव्रता भवन्तोऽस्मादृश-विचारसारेणात्मानं पावयन्तु। शाश्वतोऽयमस्माकमलौकिकसम्पर्को विजयतेतराम्। उदर्केण गुणेनात्रभवितव्यम्—

राज्ञः सम्बोधनेन प्रजापरितापः प्रशमितः। तदनन्तरं गुणगृह्याः प्रजाप्रमुखाः समेत्य राजानं निवेदयामासुः—न वयं भवतः किमपि प्रतिप्रियं कर्तुं योग्याः। तथाप्यस्माकम्।

सर्वं पुण्यं भवतु भवतो भव्यभाग्योदयाय।
विश्वाग्रे ते विलसतुतमां कीर्तिराशिः सुधामा॥

'आगमास्ते शिवाः सन्त्विति मङ्गलकामनामाशंसमाना पौरजानपदा राजानं पर्यतोषयन्। स त्वात्मना तृतीयः काशीं प्रतस्थे। कथं कथमप्युदश्रुप्रजास्तेषां दृष्टिपथात् पृथग्भूता स्वगेहं न्यवर्तन्त।

इति हरिश्चन्द्रस्य पौरजानपदामन्त्रणं नामैकादशं प्रकरणम्

अयोध्याया निर्गमनादनन्तरं कल्याणांस्तानाध्वनिकान् पद्भ्यां गच्छतो दृष्ट्वा लोका भृशं विस्मयन्ते स्म। चन्दनोचिता महानुभावाः पथि तप्तपांसुभिर्विदह्यन्त इति विस्फारितनयनाः स्तब्धा जनास्तेषामनुत्तमामभिख्यां निभालयन्तः कुतूहलिनो बभूवुः। तथाहि—चित्रं महत्तरा अपि विपद्यन्ते। किंभूतोऽयं महात्मा स्वयं दुःखायते, अपूर्वरूपश्रियं स्वपत्नीमपि वैषम्येण सन्तापयतीति। 'भवन्तः कुतः समायान्ति, कुत्र गमिष्यन्ति, किमुद्दिशन्ति' इति प्रश्नान् प्रष्टुमना अपि मूका इव तेषां गौरवेण रूपसम्पदा चावर्जिता बहवो जना अवशा इव कियद् दूरमनुगच्छन्तस्तेषां सौन्दर्यामृतरसनिष्यन्देनात्मान परितर्पयामासुः। अपरे पुनः श्रुतिसम्पन्नास्तेषां लोकोत्तरवैलक्षण्येन निरतिशयं गरिमाणमनुमाय तान् भूलोकागतान् देवान् विचार्य मधुरसमधुधाराभिः पत्रपुष्पफलादिभिश्चोपातिष्ठन्त। अन्यत्र विजनेषु वनान्तरेषु व्रजन्तस्त एकाकिनोऽपि नैसर्गिकसौन्दर्यविलासापन्नैर्मनोहारिभिर्वृक्षलतामृगैः परिवृतास्तेषां सुहृदाचरणैश्च परं प्रीता आत्मानं धन्यान् मेनिरे। भगवतः सृष्टौ नैसर्गिकशिल्पकलादीनामेतादृशं निभृतमानन्दौपयिकं रससारं न राजधान्यां क्वापि विलसतीति पुनः पुनस्तत् प्रशंसन्तस्ते मार्गश्रान्तिं विसस्मरुः। तत्र स्थाने स्थाने हरितश्यामलसुरभितशाद्वलासनैः, पक्षिणां मधुरसंगानैर्निर्झरिणीनां शीतलमधुरनीरैः, वृक्षलतादीनां पत्रपुष्पफलकन्दमूलैश्च तेषां राजोचितं स्वागतमाहृतम्। यात्राकाले सूर्यस्तेषामात्मोद्भवानां पथिकानामानन्दनिधिं वर्धयितुकामः स्वप्रतापं मृदु वितनोतिस्म।

मार्गे हरिश्चन्द्रो भविष्येण वैभवराहित्येन समुत्पन्नां शैव्यायाश्चिन्तां परिलक्ष्य तां पारमार्थिकेन सत्येन समाश्वसयितुं व्याजहार—जानीहि भो,

अस्माकमपूर्वं सुखविधानं यद्वयं राज्यपाशाद् विनिर्मुक्ताः स्वीयं श्रेयसः प्रेयसश्च साधनं स्वयमेव स्वीयेन श्रमेण तपसा चार्जयिष्यामः। एतदर्थं धनराहित्यप्रपत्तिरेव प्रथमं पदम्। तदस्मत्कृते भगवतोऽनुग्रहेण विश्वामित्रेण स्वत एव पुरस्कृतम्। पुरा ज्ञानविज्ञानयोः पारंगता ब्राह्मणाः स्वीयब्रह्मबलेन विश्वमधीनं कर्तुं समर्था अपि अपरिग्रह-व्रतं स्वीकुर्वन्ति स्म। त एव शाश्वतं सर्वत्र समाजे सर्वोच्चं प्रतिष्ठास्पदं सम्मानिताः। परिग्रहे राजवैभवे वा सम्पाद्यमाने तत्रोत्पद्यते कश्चिन्महान् दोष इति तेषां विनिर्णय आसीत्। स्वयमेव भगवता निरदेशि—

परिग्रहो हि दुःखाय यद्यत् प्रियतमं नृणाम्।
अनन्तसुखमाप्नोति तद्विद्वान् यस्त्वकिञ्चनः॥ इति

'धनेन सर्वथा सुखं प्राप्यते' इत्यपि न सत्यम्। सन्तोष एव सुखस्य परमं कारणं भवति। 'तपसा चीयते ब्रह्म' इत्यत्र स्वशक्तानां यः सम्यग् विकासः परिलक्षितः, तन्न साध्यं भवति धनिनाम्। तपस्तु निःस्वानामेव सहजातम्' इति।

शैव्या हरिश्चन्द्रस्य मनीषां वस्तुतः समर्थयन्त्यपि वितर्कयाञ्चकार— 'कस्यचित् पुरुषस्य निःस्वता भवतु नाम तस्य परमसुखसाधनं, किन्तु श्रियं विना देवानामपि प्रीतिकरा लोकभावनाश्च भूरिदक्षिणा राजसूयादयो यज्ञाः कथं सम्पादयिष्यन्ते' इति। हरिश्चन्द्रः प्रत्युवाच—श्रुतं मया तत्त्वविदां समाजे सापत्तिकं वचोऽस्मिन् प्रकरणे यद्देवा महता द्रव्येणाहूतैर्यज्ञैर्न तावत् प्रीता भवन्ति, यावत्तपोधनस्य सक्तुदानेनापि परितुष्यन्ति। तत्र धर्मक्षेत्रवासिन उञ्छवृत्तेर्ब्राह्मणस्य गाथा गीयते। स नियतेन्द्रियः भार्यापुत्रस्नुषाशिशुभिः परिवृतस्तपसि स्थितः सपरिवारः षष्ठे काले बुभुजे। यदि नाम तदा भोजनं न प्राप्येत, तर्ह्यन्यस्मिन् षष्ठे काले समुपस्थित एवाश। एकदा षष्ठे काले यवप्रस्थेन सक्तून् कृत्वा स्वस्वभागान् भोक्तुमुद्यतास्तेऽतिथिमेकं ददृशुः। आवर्जितमानसास्त आवृद्धबालमर्घ्यपादोदकादिभिरतिथिं समपूजयन्। अतिथये सिद्धान्नमग्रं प्रदीयेतेति न्यायेन सर्वे स्वभोजनानां क्रमशः क्षुधार्ता अपि सर्वाशयाभ्यागततायातृप्ति सश्रद्धं

समर्पयामासुः। ते पुनरुपवासपरिश्रान्ताः षष्ठकालं यावत्तपसि निरता बभूवुः। एवमुपचरितोऽभ्यागतस्तु तान् परीक्षितुकामो ब्राह्मणरूपधरः साक्षाद् धर्मराज आसीत्। स प्रसन्नमनास्तानभ्यनन्दत्—भो द्विजश्रेष्ठ, तव सक्तुदानयज्ञफलं तु राज्ञां नैकाश्वमेधराजसूयफलाज्ज्यायो वर्तते इति। तत्रोपस्थितेन दिव्येन यानेन स तपस्विपरिवारः स्वर्गं प्रतस्थे। अनेन हरिश्चन्द्रोदाहृतेन कथावृत्तेन यज्ञरहस्यं शैव्यायाः सुप्रकटितमासीत् यत् स एवानुत्तमो यज्ञो यस्य प्रक्रियायां कस्यचित् परार्थः स्वार्थाद् विशिष्यते। अनया दृष्ट्या च तेषां भाविजीवनं शाश्वतं यज्ञात्मकं स्यात्। एतद्विधैः काव्यशास्त्रविनोदैः परस्परं प्रह्लादयन्तौ दम्पती काशीमुपजग्मतुः।

इति काशीप्रगमनं नाम द्वादशमं प्रकरणम्।





काशिराजो हरिश्चन्द्रस्य राजसूययज्ञ उपस्थित आसीत्। काशीं प्रत्यावर्तितोऽनुध्यानपरः स तस्य सम्राट्पदाभिषेके विश्वामित्रेण कृतं विघ्नं राज्याद् विवासनं च स्मारं स्मारं महतीं चिन्तां प्रपेदे यदीदृग्विधः पुरुष-विशेष ईदृशीमापदं प्राप्नोतीति विधिरनतिक्रमणीयः। तस्मिन्नात्म-निष्क्रयार्थं काशीं समागते मया राजोचितं किं विधेयं, येन तस्य वैषम्यं न्यूनीभवेदिति विषयमधिकृत्य स सचिवैर्मन्त्रयामास। ते सर्वे राज्ञा प्रतिबोधिताः—धर्मविजयप्रवर्तयिता महाराजो हरिश्चन्द्रो राजसूये सर्वस्वं विसृज्यापि महामुनये विश्वामित्राय लक्षं दातुकामोऽस्मिन् सप्ताहेऽस्माकं नगरीमागत्यात्रैवात्मनिष्क्रयेण धनं संग्रहीष्यति। अस्माभिः सर्वं तद्विधेय-मस्मिन्नवसरे येनोपस्कृतेय काशीपुरी लोके सुप्रथितनाम्नी काशयति विश्व-लोकं सत्क्रियाभिरित्यभिख्यामथवतीं विदध्यादिति।

हरिश्चन्द्रस्य दुःस्थितिं श्रुत्वा भृशं विषण्णा मन्त्रिणः कथं कथमपि प्रकृतिमापन्ना राजादेशानुसारेण तस्य सौख्यं समीहितुमुपायान् विममर्शुः। ऊहापोहविशारदास्ते हरिश्चन्द्रप्रीतिपीडितं राजानं प्रस्तावयामासुः—भो राजन्, हरिश्चन्द्रस्य काशीयात्रां कुशलीकर्तुं महापण्डिताः सपद्येवाभीक्ष्णं स्वस्त्ययनं प्रवर्तयन्तु। तस्यागमनं सार्वजनिकपुरमहोत्सव इति पौरैरभि-नन्दनीयम्। झटित्येव नैकसाहस्राः कर्मान्तिकाः शैल्पिकाश्च घण्टापथानां रथ्यानां च निम्नानि विषमाणि च स्थलान्यनुद्धातं समीकुर्वन्तु। भूमिः पञ्चवर्णकुसुमोपहारशोभिता क्रियताम्। सर्वे महापथरथ्यापुरमार्गा अनिशं हिमशीतेन वारिणा सेचनीयाः। स्रग्दामभिर्मुक्तपुष्पैः, उद्गन्धिपुष्पा-लङ्कृतमङ्गलकलशैश्च शोभितान् राजमार्गान् शतशो नरा असंबाधान् कुर्वन्तु। सुगन्धमाल्यप्रदीपैः, गीतवाद्यनाट्यैश्च सर्वेषु मन्दिरेषु देवा

माङ्गल्याशंसयोत्थापनीयाः । अतिकर्षिणी कर्तव्येयमीशपुरी रोचिष्णुभिर्धौरेयैरभिजनैर्हरिश्चन्द्रस्याभिनन्दनाय । तस्मिन् काशीमहाद्वारं समागते स्वयमेव भवान् प्रत्युद्गम्य प्रतिपत्तिपूर्वकं सनान्दीकेन स्वागतेन तत्रभवन्तं प्रतीच्छतु । उत्सवाधिकारोच्छ्रितध्वजपताकम्, अवसक्तमाल्यदामालङ्कृतम्, उत्थापितागुरुधूपसमाकुलं राजपथं हरिश्चन्द्रः प्रविशतु । स्वकीये राजप्रासाद आवासस्य रुचिरप्रक्रियाभिस्तं राजराजेश्वरोचितं सम्मानयतु भवान् । यदि नाम सत्यात्मनस्तस्य भृत्यानुयोगायानिवार्य आग्रहो भवेदेव, स राजपुरोहितेनाभीष्टनिधिप्रदानेन भृतिगतोऽभीष्टेषु लोकाभ्युदयोद्योगेषु व्यापृतः सदातनं प्रसादमनुभवतु' इति ।

काशिराजो मन्त्रिसम्मतातिशायिनोपहारसम्भारेण हरिश्चन्द्राय स्वागतोपचारमुपचक्रमे ।

इति हरिश्चन्द्रस्य काश्यां सम्मानयोजना नाम त्रयोदशप्रकरणम् ।

स्वनियोगेऽपराङ्मुखो विश्वामित्रो हरिश्चन्द्रस्य गतिविधिमनुध्यायन् निरन्तरं ददर्श। स योगदृष्ट्या काशिराजस्य हरिश्चन्द्राय महतीं सहानुभूतिं विभाव्य स्वपरीक्षापरिपाटीं दुःसाध्यामेव मेने। तेन विचारितम्—महान् खलु मे प्रतिज्ञातो नियोगः। स तु काशिराजस्य प्रयत्नेन निष्फलो जायेत। तत्र काशिराजस्य मनागपि दोषो नास्ति। स्थाने महात्मनो हरिश्चन्द्रस्य वैषम्ये तस्यानुशययोगः। नाहं तं केनापि प्रयोगेण समुदाचाराद् विचालयितुमुत्सहे। 'किं करणीयं स्वकार्यसिद्धये' इति सततं चिन्तयन् स सिद्धसंकल्पमुपायमेकं समुपाकल्पयत्'—हरिश्चन्द्रस्य रूपं यदि नाम मायाकल्पेन परिवर्तयामि तर्हि काशिराजः पौराश्च तं कथमपि नाभिज्ञास्यन्तीति। एवं सन्धार्य स उपकाशि यात्रिकस्य हरिश्चन्द्रपरिवारस्याभिमुखं प्रत्यक्षीबभूव। विश्वामित्रस्य दर्शनेनागतसाध्वसौ दम्पती दुर्दिनतरं किंचिदपेक्षमाणावपि तमभ्यर्च्य तस्यागमनप्रयोजनं ज्ञातुकामौ सादरं प्रार्थयामासतुः—प्रसीदतु महर्षे, आदिशतु च किमपरमस्माभिरनुष्ठेयम्। निर्धारितं निधिं भवते दातुकामा वयं सर्वमनोरथपूरणीं काशीं कस्यचिज्जन्मनोऽन्यूनप्रभावेण समागताः। वयं सम्यग् जानीमो यदाधमर्ण्यं मरणमेव नृणाम्। सप्ताहावधावनन्तरिते काश्यां स्वभृतिनियोगेन भवते सर्वं दानराशिं समर्पयिष्याम इति। विश्वामित्रः ससम्भ्रमं प्रत्युवाच—किन्तु कस्त्वां पुंनागमुदारदर्शनमुन्नम्रशरीरमुन्नसाननं राजानं भृतौ नियोजयिष्यतीति महान् वितर्को मे मनसि जायते। लोकाः किंकरं नियोजयन्ति, न तु राजानम्। तव सत्त्वाभिजनविज्ञानवयोराजरूपं तु महाबाध एव भाविकार्यविधौ। न कश्चित् काकणीमपि दत्त्वा तव निष्क्रयमभियास्यतीति। क्षिप्रनिश्चयो हरिश्चन्द्रो विश्वामित्रस्य सोपपत्तिकं वचोऽसृत्य न्यवेदयत्—तर्हि विजहातु मां सर्वशो

विघ्न एव राजरूपं येन मे दक्षिणाप्रदानपथो निर्बाधः स्यात्। इदानीम-किंचित्कर एव राजानुभाव इति।

विश्वामित्रोऽनेन प्रस्तावेनात्मसमीहितं सिद्धमिवावेक्षमाणः—'एव-मस्तु। भवदीयं राजरूपं दासभावेन परिणतं भवत्वित्युक्त्वा मायामुद्भाव्य तानपह्नुतवान्। तदनन्तरं सम्यक् प्रतन्यते कार्यतन्त्रमिति विमृशन् स तडित्त्वरस्ततो निश्चक्राम।

पुरोदारदर्शनोऽप्यर्थिभावं गतो राजपरिवारो भूयसीं शान्तिमन्वभवत्। विरूपं खलु बहुगुणं सम्पद्यते, यतो हि नाम सपद्येव तं परितो दूरदूरतोऽ-प्यनुयायिनः कौतुकोत्फुल्लमनसो जनसम्मर्दा व्यलीयन्त। अत एव हरिश्चन्द्रस्य काशिसमुपस्थानं त्वरिततरं समभवत्। अचिराच्चिर प्रतीक्षितमानन्दवनं नयनपथगामि संजातम्। तत्रानिशं दिग्व्यापिनीं दिव्यश्रुतिं हरिश्चन्द्रः शुश्राव—

सत्यं सत्यं पुनः सत्यं
विदुषामेकसंश्रयम्।
दृश्यो विश्वम्भरो नित्यं
स्नातव्या मणिकर्णिका॥

अन्तःकाशीसंस्थः सोऽविमुक्तभूमिं दृष्ट्वा प्रणतिपुरस्सरमभ्यनन्दत्—

सत्यसत्त्वशालिनीं सुधर्ममार्गदर्शनीम्।
भुक्तिमुक्तिदायिनीं विरक्तिमुक्तिबोधिनीम्॥
पापसंघनाशिनीं परात्परां पुरातनीम्।
पुण्यभूमिमादरान्नमामि काशिकापुरीम्॥

पुनश्चोपश्लोकितवान्—

भाग्यैर्मेऽधिगता ह्यनेकजनुषां सर्वाघविध्वंसिनी।
सर्वाश्चर्यमयी मया शिवपुरी संसारसिन्धोस्तरी॥
लब्धं तज्जनुषः फलं कुलमलंचक्रे पवित्रीकृतः।
स्वात्मा चाप्यखिलं कृतं किमपरं सर्वोपरिष्टात् स्थितम्॥

इति हरिश्चन्द्रस्य काशीप्रपत्तिर्नाम चतुर्दशं प्रकरणम्।






सोऽयमपाश्रयो हरिश्चन्द्रो रूपपरिवर्तनेनापरिचितोऽपि नान्दीनादसमुत्थितेन स्वागतध्वनिना काश्या प्रत्युद्गत इवानन्दरागपरिपूरितदिगन्तरालं गोपुरं निभृतं प्रतिवेश। राज्ञो दर्शनेन धन्या लालित्यक्रियामाधुर्येण विश्वविख्याता लावण्यती सा नगरी तस्योदारं सत्त्वातिशयमभिजानन्ती तस्मै परात्परं ब्रह्मज्ञानं निकाममुपायनीकृतवतीति हरिश्चन्द्रः स्वजीवनस्य परमोपलब्धि समासाद्य भूयिष्ठं पह्लादितो बभूव। पुनश्च तत्र तपोधनानां मुनिवराणां शाश्वतशिवसंकल्पेन, शिष्याचार्याणां प्रज्ञानोद्भिन्नवेदघोषेण, नैकधर्मवत्सलानां पौराणां संवासेन, पञ्चमहायज्ञैर्ब्रह्मदेवपितृभूत-नृगणानामातृप्ति भावनेन, प्रतिगृहं चित्रप्रतिमाप्रतीककृतिभिः समलङ्करणेन, दूरदूरतोऽपि ध्वजपताकातोरणैः सुस्वागतं दर्शकजनमनोरञ्जनेन, पत्रपुष्पफलराशिभिर्बुद्धीन्द्रियग्रामनन्दनेन, सुवासवासोऽलंकारतिलकाञ्चितलोकसौन्दर्येण च परं प्रीतो नवतां गतश्च हरिश्चन्द्रः काश्यां परिभ्रमन् विश्वामित्रं तस्मै देयं धनं च विस्मरन्निव किंचित्कालं विहरति स्म। विश्वामित्रोऽपि छायारूपेणानुसरन् तस्य सुखमक्षममाण इव 'देहि मे दानमिति प्रतिबोधनेन तं जागरयामास। प्रतिश्रुतपरिपूरणेऽनवधानात् पापीयसी वृत्तिस्ते प्रतिफलतीति स उच्चैर्व्याजहार। हरिश्चन्द्रो व्रीडित इव पुनः पुनस्तं क्षमां ययाचे, शीघ्रमेव तस्मै धनं समर्पयितुं च वचनं ददौ।

अपरेद्युर्हरिश्चन्द्रो विश्वामित्राय देयं स्वर्णमुद्रालक्षं दासीभूयार्जितुं प्रत्यूषे शृङ्गाटकं परितः पण्यप्राङ्गणं प्रविवेश। तत्र कस्यचिद् ब्रह्मधरस्य दासो भवितुमिच्छामीति तस्य मनोरथो न सफलीबभूव, यतो हि नाम यद्यपि तत्र ब्रह्मवादिनो ब्राह्मणा गोलक्षं दत्त्वा तं ग्रहीतुकामा आसन्,

किन्तु ते स्वर्णराशिं नास्पृशन् । अत एव गोमात्रधनास्ते स्वर्णरहिता आसन् । विश्वामित्रेण पुनः पुनस्त्वरायितः स लक्षार्धदायिन उड्डामरस्य डोम्बराजस्य श्मशानाधिपस्य द्वादशवार्षिकीं भृतिं नामजातिग्रहवर्जितं स्वीचकार । अपरं लक्षार्धं प्राप्तुं स्वप्रियां शैब्यां कस्यचिद् वैश्यब्राह्मणस्य कुटुम्ब आर्यां ब्राह्मणीं परिचरितुं गृहदासीपदे नियुयुजे । पितरं दर्शं दर्शं पुनः पुनः प्रणमन् स्वमात्रा सह कुमारो रोहितो निश्चक्राम ।

सुप्रसन्न एव लक्षं यथाकालं विश्वामित्राय प्रदाय हरिश्चन्द्रः सम्यगानृण्यमाजगाम ।

इति हरिश्चन्द्रस्य भृतिनियोगो नाम पञ्चदशं प्रकरणम् ।






अहो विभूतिः काश्या योगपीठस्य महाश्मशानस्य। गङ्गातटे महाश्मशाने नियुक्तो हरिश्चन्द्रोऽनुक्षणं कर्तव्यपरायणतया स्वकर्मानुष्ठानेन च डोम्बराजस्य साचिव्यमनुप्रपेदे। 'अविमुक्तक्षेत्रेऽस्मिन् जीवानां प्राणप्रयाणोत्सवे दक्षिणकर्णे तारकब्रह्ममन्त्रं ददतो भगवतः शशिशेखरस्य कृपाकणिका भृशायते। जगज्जननीगङ्गायाः शाश्वतप्रातिवेशिकप्रतिष्ठानेन श्मशानस्य परं पावित्र्यं प्रतिष्ठितम्। सा गङ्गा विष्णुपादोद्भवा देवी विश्वेश्वरशिरःस्थिता त्रिभुवनस्य पावयित्री मुनिभिर्देवैश्चोपसेव्यते। शिवश्चात्र विश्वेश्वरलिङ्गप्रतीको ज्योतिर्लिङ्गो ब्रह्मज्योतिर्दर्शनमात्रेण वितरति। गङ्गाशिवयोः संवासात् परमोन्नायकमिदं श्मशानं सौभाग्यफलेनास्माकं संसेव्यं वर्तते' इति प्रमोदवाहिनी तस्य विचारसरणिर्नित्यं समुन्ननाम।

एकदा हरिश्चन्द्रः श्मशानप्रदेशस्य चारुतां वर्धयितुकामः सर्वेषां सहकर्मिणां सभां संबोधयामास—परमसौभाग्येन वयमत्र नियुक्ताः। 'राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः' इति न्यायेन कर्मात्मानो वयं बहूनां लोकानां सम्बन्धिनः संजाताः। तेषां बन्धुभूता वयं स्वीयेनासङ्गं लोकोत्तरसाह्यविधानेन नित्यमभ्युदयं गमिष्याम इत्युद्दिश्य गङ्गाशिवयोरौदात्यानुरूपं मनसि वचसि काये पुण्यपीयूषपूर्णमस्माकं सामग्र्यं भवतु। शिवसंकल्पेन सर्वेषां नित्यं सेवा, तापत्रयहरणं च समीहितमस्माकं भवतु। कथमेतत् सम्भविष्यतीति प्ररोचनीयं मम। प्रथमं तावदवधारणीयं भवद्भिर्यत् स्वीकृतनियोगस्य सम्यक् प्रतिपत्तिस्तु महाफला। तस्याप्रतिपत्तिरेव महापापम्। सकलजीवलोकहितार्थं गङ्गाया अनवरतजूतिरेवास्माकं कर्मयोगस्यादर्शमत्रोपन्यस्यति। अत एव कार्यगौरवं महत्तमं यथा स्यात्तथा-

नवरतं प्रयतनीयम् । ये केचिदत्रायान्ति ते सर्वेऽस्माकं ज्ञातयः । तेष्वन्वनवरतं प्रयतनीयम्
ग्भावेन समुदाचारेण च वर्तितव्यम् । अपरं च श्मशानप्रदेशस्य सर्वशोऽललिताभिरामपरिवेशेनागन्तुकानां विषादभरो हरणीय इत्युद्दिश्य छायाश्वसितपथिकजनसार्थानां मधुगन्धिनां मनोहारिवृक्षलतादीनां पुष्पफलराशयः संवर्धनीयाः । तत्राश्रिता अभिरामा लोभनीयसौन्दर्यशालिनः पालितपशुशक्षिणः सम्बन्धिप्रख्या लोकान् लालयन्तु । इह प्रतिमार्गं मङ्गलकलशा आरोपणीयाः । वर्षाशीतातपेभ्योऽचिरस्थायिनां शवयात्रिकाणां विश्रामाय रमणीया गन्धाढ्या आसन्दीयुता पर्णशाला रचनीयाः, येन महाश्मशानमिदमानन्दकाननं प्रत्यक्षं प्रतीयात् । ये चोपकार्या अकिंचना बन्धुविहोना महाप्रयाणपथिका अत्रानीयन्ते, तेषां बन्धुभूता वयं सार्वजनिककोशादिन्धनपरिधान-गन्धद्रव्यपुष्पादिसमर्पणेनान्त्येष्टिं सम्पादयेम । नगरस्य विविधभागेषु येऽनाथा असूनुत्सृजन्ति, तेषां बन्धुकृत्यं स्थाने सम्पादनीयमस्माभिः । एतस्मै प्रयोजनायास्माभिः स्वभृतेः कश्चिदंशः सार्वजनिककोशे नित्यं प्रदेयः । किंच

सर्वे क्षयान्ता निचयाः
संयोगा विप्रयोगान्ताः ।

इति विषयमधिकृत्यास्माभिर्नियुक्ताः पारायणिकाः पुराविदो दिवानिशं महतामाख्यानमाश्रावयन्तु । अस्माकमेतावता कर्मोदारेण सुकृततन्त्रेण च काशीपरतन्त्रा जना अत्रैव जीवनकाले चतुर्वर्गमनुभूयानुमरणं स्वभावतस्तपस्समाधिप्रपन्ना दिवं गमिष्यन्तीति ।

सर्वे ते विश्रब्धश्रोतारस्तस्य पुष्पितं वचो निशम्य सानन्दगद्गदं साधु साध्विति आशंसमाना महात्मायं जनोऽस्माकं जीवनपथं प्रकाशयतीति सोत्साहं सोत्सर्गं च तमभ्यनन्दन् । तेषां निरन्तरनिर्भरसहयोगेन द्रुतमेव महाश्मशाने मूर्तिमान् शिवसम्पत्त्यनुरोधिशान्तरसो विरराज ।

इति श्मशानमहिमा नाम षोडशं प्रकरणम् ।






दिवारात्रं निरन्तरं महाश्मशानस्यावश्यकेषु संविधानेष्वभिरामं व्यापृतो गतश्रमो हरिश्चन्द्रो भृतेर्द्वादश समा उन्निद्रः समवर्तत। स्वभृतेरवधिरवसितप्राय एवेति परिगणय्य स उद्विग्नमानसश्चिन्तयामास—अतो निर्मुक्तोऽप्यहं पुण्यदं स्थलमिदं परित्यक्तुं नोत्सहे। अत्रैव सन्ति मेऽकारणबान्धवाः, सफलीकृतभर्तृपिण्डाः, सहकर्माणो मयि नितरामुत्सर्गपरायणा लब्धप्रत्ययाः बहवो जनाः। नास्ति जगत्यतो श्रेयसी लोकसेवास्थली, सुसत्त्वानां सङ्गतिश्च, यत्र स्थितो जीवनस्येदृशं कल्याणावहं साफल्यमियाम्। अत्र महाविद्वांसो मोक्षकामा आमुक्ति योगाचारमीहन्ते। इहात्मोदयो मे नित्यमेव वर्धते, आत्मसम्पदश्चाधिगम्यन्ते। परिणते वयसि यदि नामेमां शिवराजधानी परित्यज्याधुनान्यत्र गच्छेयं, तर्हि विवेकशून्येषु प्रथमां गणनामेष्यामि। श्मशानमेतद् विख्यातं पेशलमविमुक्तक्षेत्रं शिवेन शाश्वतमुपसेवितं चास्ति। अत्राध्ययनं ध्यानं ज्ञानं च सर्वमक्षयं भवति।

अतो निःसृत्य च कुत्र गन्तव्यम्? अस्मिन् द्वादशवर्षान्तराले किमभवन्मे पुत्रस्य पत्न्याश्च? वैषम्येणोपहता अपि तौ जीवतः, किमुत लोकान्तरं प्रापिता इत्यस्मिन् विषये काचित् प्रवृत्तिर्न लब्धेति। एतावत्सु वितर्केषु किंकर्तव्यविमूढ एवोपनिशीथं कस्याश्चिद् विपन्नाङ्गनाया पुत्रवियोगोत्थं मुक्तकण्ठं परिदेवनं शुश्राव—एह्येहि सर्प दंशेन मामनुगृह्णातु। अकरुणाः खल्वीश्वरा मे। कुत्र गतो मे कुलधारकः' इति। तस्यास्तपस्विन्याः पुत्रस्य शवः सम्बन्धिशून्यत्वाच्छ्मशानकर्मिभिर्निहृतः। 'कुत्र गतो मे कुलधारकः' इति विलापवाक्यं श्रुत्वोद्बुद्धसंस्कारो हरिश्चन्द्रः किञ्चित् सम्भ्रममध्यगच्छत्। अवश्यंभावि भावानां प्रतिकारो न विद्यते। अहो नु खल्वतुलबलता दैवस्येति शोकसंविग्नमानसः पर्यालोचयत्।

शवस्य दाहायेन्धनादिकं सर्वसाधारणकोशात् प्रदेयमिति हरिश्चन्द्रस्य तदर्थानुज्ञा अबलाया विरोधान्नानुष्ठिता। सा तारस्वरेण रुदती प्रोवाच-- 'वयं सूर्यवंशीयाः कालचक्रावघातेन दासभूता अपि प्रतिगृहीतसामग्रीभिः शवदाहं नानुमन्यामहे। मम मङ्गलसूत्रमणिना क्रीताभिः सामग्रीभिः स्वाङ्गजस्य दाहः करिष्यते' इत्येवं वदन्ती सा कण्ठभूषणान्मङ्गलसूत्रान्महार्घमणिमेकमुद्ग्रन्थितुमारेभे। दाहविषयकं संवादं दूरादेव शृण्वन् कश्चित् प्रवयाश्चाण्डालतल्लजः 'अस्य शवस्य दाहो नापेक्षितः' इति प्राबोधयत्। सर्पदष्टा हि न दह्यन्तेऽपि तु गङ्गाजले मध्येधारं विसृज्यन्ते, यतो हि नाम सर्वौषधियोगेन गङ्गामृतवारिणाभिषिक्तो मृतोऽयमपहृतसर्पविषप्रभावः सुप्त इवोत्तिष्ठेदिति चासूचयत्।

हरिश्चन्द्रोऽबलायाः सूर्यवंशीयत्वेन मङ्गलसूत्रगथितानन्यसाधारणसूर्यमणिदर्शनेन च सद्यः प्रतीयाय यदियं कुलाङ्गना दासीरूपा मम पत्नी शैव्यास्ति, शवश्च मम कुलपुत्रस्य रोहितस्यैव। 'कुतः प्रतीपविपाकिन्यो मे पुण्यप्रवृत्तयः। अथवा किं वितर्केण? सङ्घचारिणः खल्वनर्थाः' इति सोऽचिन्तयत्। तथापि—

'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः'।

इति न्यायेन प्रज्ञया शोकप्रतिसन्धानेन स स्वीये श्मशानिककर्तव्यपथे पत्नीपुत्रादीनां विचारं विजहन्निव सुस्थिरप्रायो व्यवहरति स्म।

क्षत्रियान्वयं कुलजनं विहाय नान्यः कश्चिन्मम पुत्रमधिगङ्गं प्रवाहयेदिति दैवोपहताया मानिन्याः सत्याग्रहमनुरुध्य हरिश्चन्द्रः 'अहं सूर्यवंशीयोऽस्मि क्षत्रिय' इति शनकैर्गद्गदं निगद्याह्नाय शवं स्वयमेव गृहीत्वा गङ्गावारिषु प्लवते स्म। मध्येधारं साश्रुपातं तं प्रवाह्य पुत्रशोकेनावशस्तत्रैव स निःसंज्ञो बभूव।

वरुणकुले प्रशिक्षितो हरिश्चन्द्रस्य पुत्रो रोहित आचार्यनियोगेनान्वक्षं तत्रोपस्थाय निश्चेष्टं पितरं क्षीरनीरं निर्भरमभिषक्त उन्निनाय। तं तटमानीय तत्र स्थितान् शोककर्शितान् जनान् स न्यबोधयत्--रोहितोऽहं वरुणकुल उभयविद्ययोः पारदृश्वा स्नातको गुरुणादिष्टः --आशुकारी असि



भो वत्स, गङ्गावारिणि निस्संज्ञं निमज्जन्तं स्वपितरं रक्ष । तदनुरोधेना-त्रागामिति ।

जीवपुत्रा शैव्या प्रह्लादजननं रोहितं पुनर्लब्ध्वापि जीवितेशं हरिश्चन्द्रं निःसंज्ञमभिज्ञाय शोकाभिभूता निश्चेतना सती आत्मानं धारयितुं न शशाक । सा निष्चेष्टं धरणीतले न्यपतत् । तदा सानुक्रोशैर्ब्रह्मादिदेवर्षिभिः सपुष्पवर्षं प्रत्यक्षीभूय हरिश्चन्द्रः शैव्या चामृतयोगेन वारिणा चेतनां प्रापितौ । हरिश्चन्द्रादयः श्मशानवासिनो देवर्षीणां समागमेन विस्मयापन्ना यथायोगं समुदाचारेण स्तुतिपुरस्सरं तानभ्यनन्दन् । शैव्याहरिश्चन्द्रौ सजीवं रोहितं पुनरवाप्य सुतमुखदर्शनेन स्वस्थौ 'दिष्ट्यायुष्मान् वर्धस्वेति साशीर्वचोऽभि-ननन्दतुः । हरिश्चन्द्रस्तदा चिरात् पुत्ररत्नस्पर्शरसज्ञतां ययौ ।

अकस्मादेव शैव्याहरिश्चन्द्रौ विश्वामित्रेण मायायोगेऽपसारिते दासरूपं विहाय पुनरभिरूपं राजानुभावमवाप्य प्रकृतिस्थौ बभूवतुः । डोम्बराजस्तु धर्मराजो ब्राह्मणदम्पती च शिवौ बभूवतुः । एतदपचयोपचयविलोकनेन सर्वे जना विस्मयमापन्ना हरिश्चन्द्रस्य कांचिदलौकिकीं विभूतिं सवितर्क-मनुमेने ।

अतिभूमिगतो भवानात्मगुणानामिति परावरज्ञो ब्रह्मा हरिश्चन्द्रमा-शंसमानस्तस्य निभृतं वृत्तनिर्भेदं प्रत्यपादयत्—न केवलं वर्त्तमानयुगेऽपितु भावियुगद्वयेऽपि न केवलं परावराणां मानवानामपितु देवर्षीणामपि सच्चारित्र्यमुत्तरोत्तरं वितनितुं सर्वलोकहितकाम्ययाधिगुणस्य भवतः कीर्तिः परीक्षोपक्रमेणौदात्त्यं प्रापिता । मम निदेशेन विश्वामित्रः स्वाकीर्तिकरमपि भवतः परीक्षाविधानं संसाधयामास । न केवलं विश्वामित्रोऽपितु वरुणो धर्मराजः शिवौ च ममादेशेन स्वनियोगस्य भारभूतमनौचित्यमनिच्छन्त-स्स्वकृत्येनात्मनि सन्तप्यमाना द्वादश समाः कथंकारमक्षपयन् । सर्वे इमे ममोद्देश्यस्य निष्पत्तिं वस्तुतो लोकहितार्थं स्वीयामेव कृतार्थतां मन्यमाना अद्य कृतकृत्या अभिमनायन्ते । भवानपि 'क्लेशः फलेन हि पुनर्नवतां विधत्ते' इति न्यायेनानिर्वचनीयानन्दभाग्भवतु । भवदीया यशोगाथा परीक्षया प्रभविष्णुतमा सती विश्वतो गीयमाना देवर्षिमानवान् सत्पथ उन्नमयिष्यतीत्युद्दिश्य—गुणलुब्धैरस्माभिर्भवदीयं गुणनिधिमालोच्य

परीक्षोपक्रमोऽनुष्ठितः। भवदीयश्चरितचरणेन जगदिदं निखिलार्थमेष्यति। अपरं च—वरुणकुले प्रशिक्षितोऽयं नूतनवया रोहितोऽस्मदीयाशिषामासारैः सम्राट्पदेऽभिषिक्तः पृथिव्यां लोकरक्षाभिरतो धर्मविजयेन सदाचार-प्रतिष्ठापनेन चास्मान् सर्वान् परितोषयिष्यति। भवांस्तु सपत्नीक इत एव सशरीरं स्वर्गमधिवस्तु' देवविमानमधिरोहतु' इति।

हरिश्चद्रोऽनुत्तमां संसिद्धिमास्थितोऽकस्मादेव सर्वाभ्युदयात्मकं परि-णामं समीक्ष्य हर्षोल्लासेन पूर्वकालिकीं घटनार्तिं स्वप्नवद् विस्मृतवान्। तथापि साकेतवासिप्रजानां वाराणसेयसहकारिणां चोदात्तोपकारान् स्मारं स्मारं सहस्रगुणमुत्स्रष्टुं तेषां स्वर्गेऽपुनर्भवां संस्थितिं ब्रह्माणं प्रार्थयामास। ब्रह्मापि 'ओ३म्, सर्वे ते सख्यंगता जना यथेष्टं महीयन्ताम्। स्वर्गद्वारं तेषां कृते सदापावृतं भविष्यति। किं च ते भूयः प्रियमुपहरामीति। हरिश्चन्द्रो बद्धाञ्जलिर्ब्रह्मप्रसादं मूर्ध्ना प्रतिनन्द्य न्यवेदयत्—किमतः परमिच्छामि तथापीदमस्तु—

विष्वक् चारित्र्यबोधस्य विश्वोपायनहारिणः।
भारता भारताः सन्तु ज्ञानाम्बुधिसुधाधृताः॥

काश्यागमनपर्वणि लोकहितनिरतांस्तान् सर्वानाशंसमान इव पूर्व-दिश्युदीयमानो भगवान् भास्करः परिधूपितमसृणमाङ्गल्यरश्मिपरिधानैः पुरस्कृतवान्। सर्वे च ते भाविनियोगानुसारेण प्रतस्थिरे।

देशकालविपर्यासं कथाद्वारेण बाधितुम्।
हरिश्चन्द्रगुणोत्कर्षो दर्शितः काव्यकौतुकात्॥

इति हरिश्चन्द्रोदयो नाम सप्तदशं प्रकरणम्।
प्रणीतेयं कृतिः २०४३ विक्रमाब्दस्य
कार्तिकपूर्णिमादिवसे।

